संस्कृत न जानने वाले इस पुस्तकको न मंगा में

## सूत्रे आहुति प्रकारः

सकारं सूतकं चैव वकारं मृत्युमेव च । हकारं प्राण नाशाय आहुतिः कस्यदीयते ॥ १ ॥ सकारं च वकारं च हकारं च पुनः नपुः ॥ आहुतिस्तत्र दातव्या यत्र आकार दृश्यते ॥२॥

### रुद्राभिषेके शस्तमासाः

परशुराम पद्धतौ—जप यज्ञोशुचिर्मासे श्रेष्ठस्यादुत्तरायणे ॥ याम्यायने नभस्विष्टः पौषे नेष्टः सदोभयोः ॥ माघादि पंच मासेषु श्रावणे चाश्विनत्रये ॥ शुक्ल पक्षे दिने शुद्धे रुद्रारम्भस्तु शोभनः ॥

पराशरः—वैशाखे श्रावणे मासे आश्विने मार्गशीर्ष के ॥ माघ फाल्गुनयोर्वापि सितेपक्षे शुभे दिने ॥ रुद्रारंभः प्रकर्तव्यः पुत्र-पौत्रादि वृद्धये ॥

## शुद्ध संहार क्रम न्यासः ॥

ध्यानम् ॥ अक्षस्रजहरिणपोतमुदग्रटङ्कं विद्यांकरैः रविरतं दधतींत्रिनेत्रां । अर्द्धेन्दु मौलि भरणामरविन्दवासां वर्णेश्वरीं च प्रणमस्तन भारखिन्नाम् ॥ पूर्वोक्त स्थानेषु विलोम मातृकांन्यसेत् ॐ क्षं नमः ललाटे ॥ ॐ हं नमः मुख वृत्ते ॥ ॐ सं नमः दक्ष नेत्रे ॐ षं नमः वामनेत्रे ॥ ॐ शं नमः दक्षकर्णे ॥ ॐ वं नमः वामकर्णे ॥ ॐ लं नमः दक्ष नासायां ॥ ॐ रं नमः वाम नासायां ॥ ॐ यं नमः दक्ष गंडे ॥ ॐ मं नमः वाम गंडे ॥ ॐ भं नमः ऊर्ध्वोष्ठे ॥ ॐ बं नमः अधरोष्ठे ॐ फं नमः ऊर्ध्व दंतपंक्तौ ॥ ॐ पं नमः अधो

दन्तपंक्तौ ॥ ॐ तं नमः मूर्द्धिन ॥ ॐ थं नमः मुख वृत्ते ॥ ॐ दं नमः दक्ष बाहुमूले ॥ ॐ धं नमः दक्ष कूर्परे ॥ ॐ नं नमः दक्ष मणिबंधे ॥ ॐ णं नमः दक्ष हस्तांगुलिमूले ॥ ॐ ढं नमः दक्ष हस्तांगुल्यग्रे ॥ ॐ डं नमः वाम बाहु मूले ॥ ॐ ठं नमः वामकूर्परे ॥ ॐ टं नमः वाममणिबंधे ॥ ॐ ञं नमः वाम हस्तां गुलिमूले ॥ ॐ झं नमः वाम हस्तांगुल्यग्रे ॥ ॐ जं नमः दक्ष पादमूले ॥ ॐ छं नमः दक्ष जानुनि ॥ ॐ चं नमः दक्ष गुल्फे ॥ ॐ ङं नमः दक्षपादाङ्गुलिमूले ॥ ॐ घं नमः दक्ष पादांगुल्यग्रे ॥ ॐ गं नमः वामपादमूले ॥ ॐ खं नमः वाम जानुनि ॥ ॐ कं नमः वाम गुल्फे ॥ ॐ अः नमः वामपादांगुलिमूले ॥ ॐ अं नमः वाम पादांगुल्यग्रे ॥ ॐ औं नमः दक्षिण पार्श्वे ॥ ॐ ओं नमः वामपार्श्वे ॥ ॐ ऐं नमः पृष्ठे ॥ ॐ एं नमः नाभौ ॥ ॐ लृं नमः उदरे ॥ ॐ लृं त्वगात्मनेनमःहृदि ॥ ॐ ॠं असृगात्मने नमः दक्षांसे ॥ ॐ ऋं मांसात्मने नमः ककुदि ( गर्दन ) ॐ ऊं मेदात्मने नमः वामांसे॥ ॐ उं अस्थ्यात्मने नमः हृदयादि दक्ष हस्तांतम् ॥ ॐ ईं मज्जात्मने नमः हृदयादि वामहस्तान्तम् ॥ ॐ इं शुक्रात्मने नमः हृदयादि दक्ष पादान्तम् ॥ ॐ आं आत्मने नमः हृदयादि वाम पादान्तम् ॥ ॐ अं परमात्मने नमः हृदयादि मस्तकान्तम्॥ इति संहार क्रम न्यासः ॥ २५ पेज में छपा अशुद्ध है।

॥ ॐ नमः शिवाय ॥

मानवेभ्यश्चतुर्वर्गप्रदायिनी

# * शिवार्चन सृतिः *

## विविधोपयोगि विषयोपेता

सुम्नपुरस्थ श्रीविद्या-धर्म्म-वर्द्धिनी पाठशालायाः

( संस्कृत कॉलिज )

कर्मकाण्ड यजुर्वेदाध्यापकेन

विद्याभूषण कर्मकाण्डमणि उपाधिविभूषितेन

अयोध्यानगरस्थ "पण्डितपरिषद्" समितेः

कर्मकाण्ड विषय परीक्षकेन


**श्रीलक्ष्मीनारायण गोस्वामिना**

संगृहीता तथा श्री घनश्याम गोस्वामिना संशोधिता


परिवर्द्धिता सम्पादिता सा च

**घनश्यामदास कालीचरण भक्ताभ्यां**

नवलगढ़ निवासिभ्यां

धर्मार्थ वितरणाय


कौरोनेशन यन्त्रालये शीतलागली नं०३२६२ सद्मनि

अर्गलपुर ( आगरा ) नगरे मुद्रयित्वा प्रकाशिता च

सम्वत् १९९७ सन् १९४० ई०

द्वितीय बार ] प्राप्तिस्थानम् । [ ५००० ]

घनश्यामदास कालीचरण बेलनगंज आगरा ।

वंशीधर घनश्यामदास नं० २६ बड़तल्ला स्ट्रीट, कलकत्ता ।

॥ श्रीः ॥

# अथ शिवार्चन स्मृतिः॥

साम्बं हेरम्बदेवं गुरुवर लक्ष्मी पूर्वं नारायणौवं ।
नत्वामन्त्रमहोदधेर्गुरुधिया संहृत्यमन्त्रान्सुधी ॥
विद्याधर्मविवृद्धयेसुकृतिनां कल्याणकर्त्रीन्तया ।
संगृह्णातिशुभां शिवार्चनस्मृतिं विद्वज्जनानां मुदे ॥

## प्रयोगादौ पूजाक्रमः ॥

अथ कर्त्ता सन्ध्यातर्पणादि नित्यकर्म विधाय संगृहीत-सामग्रीकः गोमयोपलिप्तम् ॥ पूजागृहद्वारमागत्य सामान्यार्घं स्थापयेत्[1] ॥ ॐ अस्त्रायफट्, इति द्वारं सम्प्रोक्ष्य ॥ दक्षिण शाखायां—ॐ गं गणपतये नमः ॥ ॐ मं महालक्ष्म्यै नमः ॥ ॐ सं सरस्वत्यै नमः ॥ ॐ गं गंगायै नमः ॥ ॐ यं यमुनायै नमः ॥ ॐ धां धात्रे नमः ॥ ॐ विं विधात्रे नमः॥

---

टिप्पणी—१ आसनारोहणं कृत्वा स्वदक्षे बिन्दु त्रिकोणवृत्त-चतुरस्रयंत्रं विधाय तस्योपरि ॐ आधारशक्त्ये नमः इति सम्पूज्य सामान्यार्घपात्रं संस्थाप्य, नमः इति जलेनप्रपूर्य वषट् इति पुष्पं, नमः इति गंधं निक्षिप्य तज्जलेन द्वारस्थदेवान्प्रपूजयेत् ॥

ॐ नं नन्दाय नमः ॥ ॐ सुं सुन्दाय नमः ॥ ॐ प्रं प्रचण्डाय नमः ॥ ॐ क्षं क्षेत्रपालाय नमः ॥ ॐ वें वेतालाय नमः ॥ ॐ अं अग्निवेतालाय नमः ॥ इति पूजयेत् ॥ इति द्वार पूजन क्रमः ॥ अथ क्षेत्र कीलनम् ॥ जपस्थाने गत्वा पृथ्वीग्रहणंकुर्यात् ॥ तद्यथा गृहीतस्यास्यमंत्रस्य पुरश्चरणसिद्धये। मयेयंगृह्यते भूमि मंत्रोऽयंसिद्धिमाप्नुयात् ॥ इति भूमिसंग्रह ॥ अश्वत्थोदुंबरप्लक्षाणामन्यतम वितस्तिमात्रान् दशकीलान् "ॐ नमः सुदर्शनाय अस्त्राय फट्" इति मंत्रेण अष्टोत्तरशतकृत्वाभिमंत्रितान् ॥ ॐ ये चात्र विघ्नकर्तारो भुविदिव्यन्तरिक्षगाः॥विघ्नभूताश्च ये चान्ये मम मंत्रस्य सिद्धिषु ॥ १ ॥ मयैतत्कीलितं क्षेत्रं परित्यज्यविदूरतः ॥ अपसर्पन्तु ते सर्वे निर्विघ्नासिद्धिरस्तु मे ॥२॥ इति मंत्रद्वयेन १० दिक्षु १० कीलान्निखनेत् ॥ ततस्तेषु ॥ ॐ नमः सुदर्शनाय अस्त्रायफट् ॥ इति मंत्रेण प्रत्येक कीलं सम्पूज्य दिक्पालेभ्यः क्षेत्रपाल गणपतिभ्यश्च माषभक्तबलिं दत्वा-तद्वाह्ये भूत ( [१]पंचमहाभूत ) बलिंदद्यात् ॥ तत्र मन्त्राः— ये रौद्राः रौद्रकर्माणो रौद्रस्याननिवासिनः ॥ मातरोप्युग्र-

---

अथ पञ्चमहाभूत बलिदानम् ॥

१–आचम्य प्राणानायम्य ॥ अद्येत्यादि मम ( यजमानस्य ) संकल्पोक्त फलावाप्तये श्रीमहामृत्युञ्जय पुरश्चरणसिद्धये चतुर्दिक्षु गणपत्यादि देवताभ्यो दधिमाषान्नद्रव्यैः पञ्चमहाभूत बलिदानं

रूपाश्च गणाधिपतयश्च ये ॥ १ ॥ भूनराः खेचराश्चैव तथा चैवांतरिक्षगाः ॥ ते सर्वे प्रीतिमनसाः प्रतिगृह्णन्त्विमं बलिम् ॥ २ ॥ इति मंत्रद्वयेन दशदिक्षु बाह्ये माषभक्तबलिं दद्यात् ॥ ततो वामकरांगुलिभिरर्घ्यजलेनोत्सृज्य पुष्पाँजलिं गृहीत्वा ॥ ॐ भूतानि यानीह वसन्ति भूतले बलिं गृहीत्वा विधिवत्प्रयुक्तम् ॥ संतोषमासाद्य व्रजन्तु सर्वे क्षमन्तुतान्यत्र नमोस्तुतेभ्यः ॥ इति पुष्पाञ्जलिं दत्वा प्रणम्य हस्तौपादौ प्रक्षाल्याचामेत् ॥ इति क्षेत्र कीलनम् ॥

---

करिष्ये ॥ चक्रस्य पूर्वे भूमौ सिन्दूरेण विन्दु त्रिकोण वृत्त चतुस्रात्मक यन्त्रंविलिख्य ॥ गं गणेश बलिपात्राधार मण्डलाय नमः, इति गन्धपुष्पाभ्यां सम्पूज्य ॥ तदुपरि श्वअन्न्यञ्जनयुतमाधारं बलिं च निधाय ॥ ॐ गं गणेश बलिद्रव्याय नमः, इति गन्ध पुष्पाभ्यां सम्पूज्य पूर्वे गणेशाय नमः, इति सम्पूज्य बलिमुपनीय॥ गां गीं गूँ गैं गौं गः गणपतये वर वरद सर्वजनं मे वशमानय सर्वोपचारसहितं बलिं गृह्ण २ स्वाहा ॥ इति वामांगुष्ठमध्यमाभ्यां बलिमुत्सृजेत् दक्षहस्तेन जलं त्यजेत् ॥ कराभ्यां पुष्पाणि गृहीत्वा प्रार्थयेत् ॥ सर्वदा सर्वकार्याणि निर्विघ्नं साधयेन्मम ॥ शान्तिं करोतु सततं विघ्नराजः सशक्तिकः ॥ इति पुष्पांजलिंदद्यात् ॥१॥

चक्रस्य दक्षिणे पूर्ववत् यन्त्रं विलिख्य ॥ वं वटुक बलिपात्राधार मण्डलाय नमः, इति गन्ध पुष्पाभ्यां सम्पूज्य ॥ श्वअन्न्यञ्जनयुतमाधारं बलिं च निधाय ॥ ॐ वँ वटुक बलिद्रव्याय नमः इति गन्ध पुष्पाभ्यां सम्पूज्य ॥ दक्षिणे वँ वटुकाय नमः,इति सम्पूज्य बलिमुपनीय ॥ ॐ ऐं ह्रीं श्रीं एह्य हि देवीपुत्रवटुकनाथ कपिलजटाभार-

भास्वरत्रिनेत्र ज्वालामुख सर्वविघ्नान्नाशय २ सर्वोपचारसहितंबलिं गृह्ण २ स्वाहा ॥ इति वामांगुष्ठ अनामिकाभ्यां बलिमुत्सृजेत् ॥ दक्ष हस्तेन जलंत्यजेत् ॥ कराभ्यां पुष्पाणि गृहीत्वा प्रार्थयेत् ॥ ॐ कर कलितकपालः कुण्डलीदण्डपाणिस्तरुणतिमिरनीलव्यालयज्ञोपवीती॥ क्रतुसमयसपर्याविघ्नविच्छेदहेतुर्जयति बटुकनाथः सिद्धिदः साधकानाम् ॥ बलिदानेन सन्तुष्टो बटुकः सर्वसिद्धिदः ॥ शान्तिं करोतु मे नित्यं भूतवेताल सेवितः ॥ इति पुष्पाञ्जलिं दद्यात् ॥२॥

चक्रस्य पश्चिमे पूर्ववत् यन्त्रंविलिख्य यां योगिनी बलिपात्राधार मण्डलाय नमः ॥ इति गन्धपुष्पाभ्यां सम्पूज्य तदुपरि अन्न व्यञ्जनयुतमाधारं बलिं च निधाय ॥ ॐ यां योगिनी बलिद्रव्याय नमः ॥ इति गन्धपुष्पाभ्यां सम्पूज्य ॥ पश्चिमे यां सर्वयोगिनीभ्यो नमः ॥ इति सम्पूज्य बलिमुपनीय ॥ ॐ सर्ववर्ण योगिनीभ्य इमं बलिं गृह्ण २ हुं फट् स्वाहा इति वामांगुष्ठ मध्यमानामिकाभिः बलिमुत्सृजेत् ॥ दक्षहस्तेन जलंत्यजेत् ॥ पुष्पाञ्जलिं गृहीत्वा प्रार्थयेत् ॥ ॐ ऊर्ध्वंब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा॥ पाताले वा ( स्थले ) ऽनले वा सलिलपवनयोर्यत्रकुत्रस्थिता वा ॥ क्षेत्रे पीठोपपीठा दिषु च कृतपदा धूपदीपादिकेभ्यः ॥ प्रीतादेव्यासदानः शुभविधिबलिनापान्तुवीरेन्द्रवन्द्याः ॥ या केचियोगिनी रौद्रा सौम्या घोरपरापराः ॥ खेचरी भूचरी व्योमवती प्रीतास्तु मे सदा ॥ यां योगिनीभ्यः स्वाहा ॥ सर्वे योगिनीभ्यः स्वाहा फट् ॥ इति पुष्पांजलिं दद्यात् ॥३॥

चक्रस्य उत्तरे पूर्ववत् यन्त्रंविलिख्य ॥ क्षं क्षेत्रपाल बलिपात्राधार मण्डलाय नमः ॥ इति गंधपुष्पाभ्यां सम्पूज्य ॥ अन्नव्यंजनयुतमाधारं बलिं च निधाय ॥ ॐ क्षं क्षेत्रपाल बलिद्रव्याय नमः

इति गंधपुष्पाभ्यां सम्पूज्य ॥ उत्तरे क्षं क्षेत्रपालाय नमः इति सम्पूज्य बलिमुपनीय ॥ क्षां क्षीं क्षूं क्षैं क्षौं क्षः भो स्थान क्षेत्रपाल इमं बलिं गृह्ण २ सर्वकामान् पूरय २ स्वाहा ॥ वामांगुष्ठतर्जनीभ्यां बलिमुत्सृजेत् दक्षहस्तेन जलंत्यजेत्।पुष्पांजलिं गृहीत्वा प्रार्थयेत् ॥ योऽस्मिन्क्षेत्रे निवासी च क्षेत्रपालः स किंकरः॥ प्रीतोयं बलिदानेन सर्वरक्षां करोतु मे ॥ इति पुष्पाञ्जलिं दद्यात् ॥४॥

स्ववामे चतुष्कोणमंडलं विलिख्य सर्वभूतविघ्नकृत् बलिपात्राधारमंडलाय नमः॥ इतिगन्धपुष्पाभ्यां सम्पूज्य ॥ तदुपरि अन्नव्यञ्जनयुक्तमाधारं बलिं च निधाय ॥ सर्वभूतकृत् बलिद्रव्याय नमः ॥ इति गंधपुष्पाभ्यां सम्पूज्य ॥ बलिमुपनीय ओं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्य इमं बलिं गृह्ण २ हुं फट् स्वाहा ॥ इति सर्वाङ्गुलीभिः बलिमुत्सृजेत् ॥ दक्षेनजलंत्यजेत् ॥पुष्पाञ्जलिंगृहीत्वा प्रार्थयेत् ॥ भूता ये विघ्नकर्तारो दिविभूम्यन्तरिक्षगाः ॥ पातालस्थलसंस्थाश्च शिवयोगेन भाविता. ॥ क्रूराद्याः शतसंख्याकाः पाखण्डाद्याव्यवस्थिताः ॥ तृप्यन्तु प्रीतिमनसो भूतागृह्णन्त्विमं बलिम् ॥ नगरे वायसंग्रामे अटव्यां वै सरित्तटे ॥ वापीकूपेषु वृक्षेषु श्मशाने च चतुष्पथे ॥ नानारूपधरा ये च बहुरूपधराश्च ये ॥ ते सर्वे चैव सन्तुष्टा बलिंगृह्णन्तु मे सदा ॥ इति पुष्पाञ्जलिं दद्यात् ॥ ५ ॥

ततः प्रधान बलिः ॥ मध्ये पूर्वन्मण्डलं विधाय ॐ हसौः महामृत्युञ्जय बलिपात्राधार मण्डलाय नमः ॥ इति गन्धपुष्पाभ्यां संपूज्य तदुपरि अन्नव्यञ्जनयुक्तमाधारं बलिं च निधाय ॥ ॐ बलिद्रव्याय नमः ॥ इति गन्धपुष्पाभ्यां संपूज्य ॥ ॐ ह्रौं जूँ सः महामृत्युञ्जय शिवाय नमः ॥ इति संपूज्य बलिमुपनीय ॥ ॐ ह्रौं श्रों जूँ सः भूर्भुवःस्वः त्र्यंबकं यजामहे सुगन्धिं पुष्टि वर्द्धनम् ॥ उर्वारुक मिव बन्धनान्मृत्योर्मुक्षीयमामृतात् भूर्भुवः

# अथ प्रयोग विधानम् ॥

ह्रौं अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यंतरः शुचिः ॥१॥ इतिमंत्रेण मंडपान्तरं प्रोक्ष्य तत्रतावत् आसनभूमौ कूर्मशोधनं कार्यम् ॥

कूर्म चक्रम् ॥

| | | |
|---|---|---|
| क्ष त्र ज्ञ | क वर्ग | च वर्ग |
| श ष स ह | अं अः । अ आ । इ ई<br>ओ औ । ० । उ ऊ<br>ए ऐ । लृ ॡ । ऋ ॠ | ट वर्ग |
| य र ल व | प वर्ग | त वर्ग |

ह्स्रौं जूं सः ह्रीं ॐ एह्येहि सर्वचराचरपितः इममममृतमयं बलिं गृह्ण २ सिद्धिं देहि २ शत्रुव्याधिक्षयं कुरु २ ह्रौं ह्रीं श्रीं श्रीं हुं फट् स्वाहा ॥ प्रार्थना ॥ करचरणकृतंवाक्कायजं कर्मजं वा श्रवण-नयनजं वा मानसं वा पराधम्॥ विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेवशंभो ! इति पुष्पाञ्जलिं दद्यात् ॥

॥ इतिपञ्चमहाभूत बलिः ॥

यत्र जपकर्ता एक एव तत्र कूर्ममुखे उपविश्य जपं तत्रैव दीपस्थापनं च कुर्यात् ॥ यत्र बहवो जापकास्तत्र कूर्ममुखोपरि दीपमेवस्थापयेत् ॥ एवं कूर्मशोधनं विधाय ॥ तत्रासनाधो जलादिना त्रिकोणयन्त्रंविलिख्य, तत्र ॐ कूर्मासनाय नमः ॐ ह्रीं आधारशक्तिकमलासनाय नमः॥ ॐ पृथिव्यै नमः॥ इति गन्धाक्षत पुष्पैः सम्पूज्य तदुपरि कुशासनं तदुपरि मृगाजिनं तदुपरि कंबलाद्यासनमास्तीर्य स्थापितानां त्रयाणामासनानामुपरिक्रमेण ॐ अं अनन्तासनाय नमः, ॥ ॐ विं विमलासनाय नमः ॥ ॐ पं पद्मासनाय नमः ॥ इति मंत्रेण

---

मनुः अ० ११ श्लोक ३२।

स्ववीर्याद्राजवीर्याच्च स्ववीर्यं बलवत्तरम्।
तस्मात्स्वेनैव वीर्येण निगृह्णीयादरीन् द्विजः ॥ ३२ ॥

अथ षट्कर्माणि

शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटने तथा।
मारणान्तानि शंसन्ति षट् कर्माणि मनीषिणः ॥ १ ॥

षट् कर्मणां लक्षणम् ॥

रोग कृत्या ग्रहादीनां निरासः शान्तिरीरिता।
वश्यं जनानां सर्वेषां विधेयत्वमुदीरितम् ॥ २ ॥
प्रवृत्ति रोधः सर्वेषां स्तम्भनं समुदाहृतम् ॥
स्निग्धानां द्वेषजननं मिथोविद्वेषणंमतम् ॥ ३ ॥
उच्चाटनं स्वदेशादेर्भ्रंशनं परिकीर्त्तितम् ॥
प्राणिनां प्राणहरणं मरणंमुदाहृतम् ॥ ४ ॥
स्वदेवतादिकालादीन् ज्ञात्वाकर्माणि साधयेत् ॥

त्रीन् दर्भान् प्रत्येक आसनोपरि निदध्यात् ॥ एवमासनं संस्थाप्य तत्र प्राङ्मुख उदङ्मुखो वा आसने उपविश्य आसनंशोधयेत् ॥ तत्र मन्त्रः ॥ ॐ पृथ्वीति मंत्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मोदेवता आसनोपवेशने विनियोगः॥ ॐ पृथ्वी त्वया धृतालोका देवि त्वं विष्णुना धृता त्वं च धारय मां देवि पवित्रं कुरुचासनम् ॥ इति त्रिर्वामपार्ष्णिघातंदत्वा ॥ आसने उपविश्य ॥ इति मंत्रेणासनं शोधयेत् ॥ ततः मूल मंत्रेण शिखांवद्ध्वा आचम्य ॐ जूँ सः आत्मतत्त्वंशोधयामि स्वाहा ॥ ॐ जूँ सः विद्यातत्वंशोधयामि स्वाहा ॥ ॐ जूँ सः शिवतत्वं शोधयामि स्वाहा ॥ इति त्रिराचम्य भूतापसर्पणं कुर्यात् ॥ ॐ अपःसर्पन्तु ते भूता ये भूता भुविसंस्थिताः ॥ ये भूता विघ्नकर्तारस्तेनश्यन्तु शिवाज्ञया ॥ इति विघ्नानुत्सार्थं हुं अघोरास्त्रायफट् इति तालत्रयं दद्यात् ॥ प्राणायामं कुर्यात् ॥ तद्यथा दक्षिणहस्तांगुष्ठेन दक्षनासापुटं निरुध्य वामनासापुटेन मूलं षोडशवारं जपन् प्राणाख्यवायुमाकृष्य शिरसि सहस्रारे धारयेदिति पूरकम् ॥ पुनः दक्षहस्तानामिकातर्जन्यंगुष्ठैर्नासापुटद्वयं निरुध्य मूलं चतुष्षष्ठिवारं जपन् कुम्भयेत् ॥ पुनर्दक्षनासापुटांगुष्ठनिधनं त्यक्त्वामूलं द्वात्रिंशद्वारं जपन् शनैः शनैस्तद्वायुं रेचयेत् इति प्राणायाम त्रयं कुर्यात् (मूलमन्त्रप्रणवः) देशकालौ संकीर्त्य अमुक गोत्र- अमुक देवशर्माहम् श्रीमहामृत्युञ्जयप्रसादसिद्धिद्वारा

सर्वापच्छान्ति दुरितक्षयपूर्वक महामृत्युञ्जयमंत्रस्य सिद्धि कामो अद्यारभ्य यावत्कालेन सेत्स्यति तावत्कालपर्यन्तं महामृत्युञ्जयमन्त्रस्य १०८।१००० संख्याकं जपं तद्दशांश*होम तद्दशांशतर्पण तद्दशांशाभिषेक तद्दशांश ब्राह्मण-भोजनरूप पुरश्चरणं ( जप पुरश्चरणं वा ) करिष्ये।। यजमानपक्षे ब्राह्मणद्वाराकारयिष्ये॥ इति संकल्प्य ॐ नमः सुदर्शनाय अस्त्राय फट् इति मन्त्रेण दिग्बंधनंकृत्वा त्रितालं दद्यात्।[1]अग्निप्राकार मुद्रा [2]चक्रमुद्रा [3]शक्तिमुद्राः दर्शयेत्॥ भूतशुद्धिं च कुर्यात् ॥

---

टि०-(१) वर्मोहम्, शुनोहम् । मन्त्रतन्त्र प्रकाशे ॥

*असम्भवे च होमस्य होमास्स्यात् द्विगुणो जपः ॥ अन्यत्रापि होमकर्मण्यशक्तानां विप्राणां द्विगुणो जपः ॥ इतरेषां च वर्णानाम् त्रिगुणादि समीरितः ॥ एकमङ्गं विहीयेत ततोनिष्टमवाप्नुयात् ॥ अङ्गहीनंभवेचयत् तत्तन्निष्टार्थसाधकम् ॥

वह्निप्राकार मुद्रा प्रयोगसारे ॥

(२) त्रिशूलाग्रौ करौ कृत्वा व्यस्तहस्तम्त्वाभितोन्यसेत् ॥ अस्य-मुद्रेयमाख्याता वह्निप्राकार लक्षणा ॥ परद्रोहोपशमनीनागा-शनिभयापहा ॥ चक्रमुद्रा ॥

( ३ ) विपर्यस्ते तले कृत्वा वामदक्षिणहस्तयोः ॥ अंगुष्ठौ ग्रथयेच्चैव कनिष्ठानामिकान्तरे ॥ चक्रमुद्रेयमुद्दिष्टा सर्वसिद्धि-करीशुभा॥ शक्तिमुद्रा ॥

(४) मुष्टिं कृत्वा कराभ्यां च वामस्योपरिदक्षिणम् ॥ कृत्वा शिरसि संयोज्या शक्तिमुद्रेयमीरिता ॥

## अथ यामलोक्त भूतशुद्धिःप्रारभ्यते।

भूतशुद्धिं लिपिन्यासौ विनायस्तु प्रपूजयेत्।
विपरीत फलंदद्यादभक्त्यापूजने यथा ॥ १ ॥

ॐ सूर्यः सोमो यमः कालः सन्ध्या भूतानि पंच च ॥
एते शुभाशुभस्येह कर्मणो मम साक्षिणः ॥ १ ॥ भो देव !
प्राकृतं चित्तं पापाक्रांतमभून्मम ॥ तन्निःसारय चित्तान्मे पापं
तेस्तु नमोनमः॥२॥इति प्रार्थ्य स्वदक्षिणभागे ॐ गुं गुरुभ्यो
नमः॥स्ववाम भागे ॐ गं गणपतये नमः ॥ पृष्ठे ॐ क्षं
क्षेत्रपालाय नमः॥ हृदि इष्ट देवतायै नमः ॥ इति नत्वा
भूतशुद्धिं कुर्यात् ॥ तथा च कुम्भक प्राणायामे मूलाधारात्
कुण्डलिनीं परदेवतां बिसतंतुनिभां समुत्थाप्य ब्रह्मरंध्र-
गतांस्मृत्वा हृदयस्थं जीवं प्रदीप कलिकाकारं गृहीत्वा
सुषुम्णामार्गेण ब्रह्मरंध्रं गत्वा हँ सः सोहँ इति मन्त्रेण
जीवं ब्रह्मणि संयोजयेत् ॥ ततः पादादिजानुपर्यन्तं
चतुष्कोणं वज्रांकितं स्वर्णवर्णं पृथ्वीमण्डलं ( ॐ लं )
इति भू बीजाढ्यं स्मरेत् ॥१॥ जान्वादिनाभिपर्यन्तं अर्द्ध
चन्द्राकारं पद्मद्वयाङ्कितं श्वेतवर्णं अपांस्थानं सोममण्डलं
"ॐ वं" इतिवरुणबीजाढ्यं स्मरेत् ॥ २ ॥ नाभ्यादि हृदय

---

शान्तिकर्मणि तिथिवार नियमः ।
द्वितीया च तृतीया च पञ्चमी सप्तमी तथा।
बुधेज्य काव्य सोमाश्च शान्तिकर्मणिकीर्तिताः ।

पर्यन्तं त्रिकोणं स्वस्तिकाङ्कितं रक्तवर्णमग्निमण्डलं "ॐ रं" इति वह्नि बीजाढ्यं स्मरेत् ॥ ३ ॥ हृदयादिभ्रूमध्यपर्यन्तं वृत्तं षड्बिन्दुलाञ्छितं धूम्राभं वायुमण्डलं "ॐ यं" इति वायु बीजाढ्यं स्मरेत् ॥ ४ ॥ भ्रूमध्यादारभ्यब्रह्मरंध्रान्तं वृत्तं स्वच्छमनोहरमाकाशमण्डलं "ॐ हं" इति आकाश बीजाढ्यं स्मरेत् ॥ ५ ॥ एवं भूतगणं स्मृत्वा ततः पूर्वोक्त पृथ्वीमण्डले पादेन्द्रियं १ गमनं २ घ्राणं ३ गन्धः ४ ब्रह्मा ५ निवृत्तिः ६ समानः गन्तव्यदेशः च एवमष्टौपदाश्चिन्त्याः ॥ १ ॥ जलमण्डले हस्तेन्द्रिय १ ग्रहण २ ग्राह्य ३ रसना ४ रस ५ विष्णु ६ प्रतिष्ठा ७ दानाः ८ ध्येयाः ॥ २ ॥ तेज मण्डलमध्ये वायु १ विसर्ग २ विसर्जनीय ३ चक्षू ४ रूप ५ शिव ६ विद्या ७ व्याना ८ ध्येयाः ॥ ३ ॥ वायुमण्डले उपस्था १ नन्द २ स्त्री ३ स्पर्शन ४ स्पर्श ५ ईशान ६ शान्त्यु ७ पानाः ८ ध्येयाः ॥४॥ आकाशमण्डले वाक् १ वक्तव्य २ वदन ३ श्रोत्र ४ शब्द ५ सदाशिव ६ शान्त्यतीताः ७ प्राणाः ८ इत्यष्टौ चिन्त्याः ॥ ५ ॥ एवं भूतानि सञ्चिन्त्य पूर्वं पूर्वं कार्यस्योत्तरं कारणे विलापनं ब्रह्मपर्यन्तं कार्यम् तथा च—ॐ लं हुं फट् इत्यनेन पञ्चगुणां पृथ्वीमप्सु उपसंहरामि इति जले भुवं विलापयेत् ॥१॥ ॐ वं हुं फट् इति चतुर्गुणा अपोग्नौ उपसंहरामि ॥ इति अमाअपः विलापयेत् ॥ १ । ॐ रं हुं फट् इति त्रिगुणं तेजो

वायावुपसंहरामि इति वह्निं वायौ विलापयेत् ॥ ३ ॥ ॐ यँ हुं फट् इति द्विगुणं वायुमाकाश उपसंहरामि इति वायुमाकाशे विलापयेत् ॥ ४ ॥ ॐ हं हुं फट् इत्येकगुणमाकाशमहंकार उपसंहरामि इत्याकाशमहंकारे विलापयेत् ॥५॥ ॐ अहंकारं महत्तत्वे उपसंहरामि ॥ इति अहंकारं महत्तत्वे विलायेत् ॥६॥ ॐ महत्तत्वं प्रकृतावुपसंहरामि॥ इति महत्तत्वं प्रकृतौ विलापयेत्॥७॥ ॐ प्रकृतिमात्मन्युपसंहरामि॥इत्यनेन मायामात्मनि विलापयेत् ॥ ८ ॥ एवं शुद्धसच्चिन्मयो भूत्वा स्वात्मानं शिवमयं विभाव्य ॥ अहं देव न चान्योस्मि ब्रह्मैवाहं न शोकभाक्॥ सच्चिदानन्द रूपोहं नित्यमुक्तः स्वभाववान् ॥ स्वशरीर दक्षकुक्षौ पापपुरुषं चिन्तयेत् ॥ ब्रह्महत्या शिरस्कं च स्वर्णस्तेय भुजद्वयम् ॥ सुरापानहृदायुक्तं गुरुतल्प कटिद्वयम् । तत्संयोगिपदद्वन्द्वमंगमत्यङ्गपातकम् ॥ उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥ खड्गचर्मधरंपापमंगुष्ठपरिमाणकम् ॥ अधोमुखं कृष्णवर्णं दक्षकुक्षौविचिन्तयेत् ॥ शरीरं स कलुषं मलिनं विचिन्त्य प्राणायामेन निष्पापं कुर्यात्। पूरकप्राणायामे—"ॐ यं" इति वायु बीजेन द्वात्रिंशद्वारं ( ३२ ) षोड़श ( १६ ) वारं वा आवर्त्तितेन पापपुरुषं शोषयेत् ॥ ततः स्वशरीरयुतं पापं कुम्भके "ॐ रं" इति वह्निबीजेन चतुष्षष्ठि ( ६४ ) द्वात्रिंशद्द ( ३२ ) वारं वाआवर्त्तितेन तदुत्थाग्निना दहेत्॥२॥ ततो रेचक प्राणायामे

"ॐ यं" इति वायुबीजेन षोड़श वारं अष्टवारं वा जपित्वा दक्षिणनाड्या तद्भस्म स्वशरीराद्बहिः रेचयेत् ॥ ३ ॥ ततो देहोत्थं भस्म "ॐ वं" इत्युच्चारितेन सुधा बीजेन तदुत्थामृतेन सम्प्लाव्य पश्चात् "ॐ लं" इति भू बीजेन तद्भस्म घनीभूतं पिण्डं कृत्वा कनकाण्डवत् भावयेत् ॥ ४ ॥ ततः "ॐ हं" इति आकाश बीजं जपन् तत्पिण्डं मुकुराकारं भावयित्वा तस्यमूर्द्धादि नखान्ता अवयवा मनसा रचनीयाः ॥ ५ ॥ ततः पुनरपि सृष्टिमार्गेण ब्रह्मणः सकाशात् आकाशादीनि भूतान्युत्पादयेत् ॥ तथा च ब्रह्मणः प्रकृतिः १ प्रकृतेर्महत् २ महतोऽहंकारः ३ अहंकारादाकाशः ४ आकाशाद्वायुः ५ वायोरग्निः ६ अग्नेराप: ७ अद्भ्यः पृथ्वी ८ पृथिव्या ओषधयः ९ ओषधीभ्योऽन्नम् १० अन्नाद्रेतः ११ रेतसः पुरुषः १२ इत्युत्पाद्यः ॥ ॐ हं सः सोऽहम् इति मन्त्रेण ब्रह्मणोक्तं भूतं जीवं स्वहृदयाम्बुजे संस्थाप्य कुण्डलिनीं मूलाधारे स्थापयित्वा स्वशरीरं निरस्त समस्तकिल्विषं देवताराधनयोग्यं भावयेदिति ॥ अथध्यानम् ॥ ॐ रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः, पाशं कोदंड मिक्षूद्भवमथचाप्यङ्कुशं पञ्चबाणान् ॥ बिभ्राणा सृक्कपालं त्रिनयनलसितापीनवक्षो रुहाढ्या ॥ देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परानः ॥१॥ इति भूतशुद्धिः ॥ एवम् भूतशुद्धिंकृत्वा स्वशरीरे स्वेष्टदेवतायाः प्राणानप्रतिष्ठापयेत् ।

## अथ स्व प्राणप्रतिष्ठा प्रकारः ॥

ॐ अस्य स्व प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा-ऋषयः ऋग्यजुः सामानि छन्दांसि प्राणशक्तिर्देवता आँ बीजं ह्रीं शक्तिः क्रों कीलकं स्वशरीरे महामृत्युञ्जयदेवस्य प्राण-प्रतिष्ठापने विनियोगः ॥ अथ ऋष्यादिन्यासः ॥ ॐ ब्रह्म-विष्णुमहेश्वरऋषिभ्यो नमः शिरसि ॥ ॐ ऋग्यजुः सामानि छन्दोभ्यो नमः मुखे ॥ ॐ प्राणशक्त्यै नमो हृदि ॥ ॐ आँ बीजाय नमो गुह्ये ॥ ॐ ह्रीं शक्तये नमः पादयोः ॥ ॐ क्रों कीलकाय नमः सर्वाङ्गे ॥ इतिऋष्यादिन्यासः ॥ अथ करन्यासः ॥ ॐ ङं कं खं घं गं नाभौ वाय्वग्निवार्भूम्यात्मने अङ्गुष्ठाभ्यान्नमः (हृदयाय नमः) ॐ ञं चं छं जं झं शब्द-स्पर्श रूप रस गन्धात्मने तर्जनीभ्यान्नमः ॥ (शिरसे स्वाहा) ॐ णं टं ठं ढं डं श्रोत्र त्वङ् नयन जिह्वा घ्राणात्मने नमः मध्यमाभ्यान्नमः॥(शिखायैवषट्) ॐ नं तं थं धं दं वाक्पाणि पायूपस्थात्मने अनामिकाभ्यान्नमः ॥ (कवचायहुं) ॐ मं पं फं भं बं वक्तव्यादान गमन विसर्गानन्दात्मने कनिष्ठकाभ्यां नमः ॥ (नेत्रत्रयायवौषट्) ॐ शं यं रं वं लं हं क्षं सं लं बुद्धि मनोहंकार चित्तात्मने करतलकरपृष्ठाभ्यान्नमः (अस्त्रायफट्) इति षडंगन्यासः एवं हृदयादि कर षडंगन्यासान् कृत्वा नाभेरारभ्य पादान्तम् (आँ) इति पाश बीजं स्मरेत् ॥ हृदयादारभ्य नाभ्यन्तम् (ह्रीं) इति शक्तिबीजं न्यसेत् ॥१॥

मस्तकादारभ्य हृदयान्तम् (क्रौं) इति सृणि बीजं स्मरेत् ॥३॥
ॐ यं त्वगात्मने नमः ॥ ॐ रं असृगात्मने नमः ॥ ॐ लं
मांसात्मने नमः ॥ ॐ वं मेदात्मने नमः ॥ ॐ शं अस्थ्यात्मने
नमः ॥ ॐ षं मज्जात्मने नमः ॥ ॐ सं शुक्रात्मने नमः ॥
ॐ हौं ओजात्मने नमः ॥ ॐ हं प्राणात्मने नमः ॥ ॐ सं
जीवात्मने नमः ॥ इति दशधा हृदि विन्यसेत् ॥ ॐ य रं लं वं
शं षं सं हं लं क्षं इति मूर्द्धादिचरणावधि व्यापकं कुर्यात् ॥५॥
ततः मण्डूकादि परतत्वान्त पीठदेवताभ्यो नमः॥१। ॐ जयादि
शक्तिभ्यो नमः ॥ २ ॥ इति नत्वा ॥ ॐ आं ह्रीं क्रौं पीठाय
नमः ॥ इति पीठे प्राणशक्तिं देवीं ध्यायेत् ॥ ध्यानम् ॥ ॐ
पाशंचापा सृकपाले सृणीपुन्दूलं हस्तैर्बिभ्रतीं रक्तवर्णाम् ॥
रक्तोदन्वत्पोतरक्ताम्बुजस्थां देवीं ध्याये प्राणशक्ति त्रिनेत्रां॥
इति ध्यात्वा हृदि करं निधाय ॐ जूं सः शिवाय प्राणात्मने
नमः॥इति स्व हृदि पुष्पंदत्वा ॥ ॐ आं ह्रीं क्रौं यं रं लं वं शं
सं हौं हंसः ॐ ममशरीरे महामृत्युञ्जय देवतायाः प्राणा इह
(स्थितः) प्राणाः ॥ पुनः ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हौं
हंसः ॐ ममशरीरे महामृत्युञ्जय देवतायाः जीव इह स्थितः
॥२॥ ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हौं हंसः ॐ मम शरीरे
महामृत्युञ्जय देवतायाः सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्र
जिह्वा घ्राण पाद पायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु
स्वाहा ॥ ३ ॥ इति वारत्रयेण महामृत्युंजय देवतायाः

प्राणान् प्रतिष्ठाप्य ॥ ततः ॐ इति १५ प्रणवेन पञ्चदशावृत्तिं कृत्वा अनेन मम देहस्य महामृत्युंजयस्य गर्भाधानादि पञ्चदशसंस्कारान्सम्पादयामि ॥ इति पठेत् ॥ इति स्वस्य प्राणप्रतिष्ठा प्रयोगः ॥ एवं प्राणान्प्रतिष्ठाप्य ॥ देवो भूत्वा देवं यजेत् ॥ देवतारूपमात्मानं भावयेत् ॥

## अथ अन्तरमातृका न्यासः ॥

अथान्तरमातृका न्यास मन्त्रस्य ब्रह्मऋषिः गायत्रीछन्दः मातृकासरस्वतीदेवता हलो बीजानि स्वराः शक्तयः क्षं कीलकं अखिलाप्तये न्यासे विनियोगः ॥ इति जलं भूमौ निक्षिप्य प्राणायामं कुर्यात् ॥ तथा च इड़या ॥ अ इ उ ऋ लृ ए ऐ ओ औ अं अः एभिः स्वरैः पूरयेत् ॥ पुनः कु चु टु तु पु इति पञ्चवर्गकेन कुम्भयेत् । पुनः य र ल व श ष स ह एभिरष्ट वर्णैः रेचयेत् ॥ इति प्राणायामं कृत्वा ऋष्यादिन्यासं कुर्यात् ॥ तथा च ॥ ॐ अं ब्रह्मणेऋषये नमः आँ शिरसि ॥१॥ ॐ इं गायत्रीछन्दसे नमः इँ मुखे॥२॥ ॐ उँ सरस्वतीदेवतायै नमः ऊँ हृदये ॥ ३ ॥ ॐ एं हलभ्यो बीजेभ्यो नमः एँ गुह्ये ॥४॥ ॐ ओं स्वरेभ्यो शक्तिभ्यो नमः औं पादयोः॥५॥ ॐ अं क्षं कीलकाय नमः अः सर्वाङ्गे ॥६॥ इति ऋष्यादि न्यासः ॥ ॐ अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः॥ ॐ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः ॥२॥ ॐ उं टं ठं डं ढं णं

ङं मध्यमाभ्यां नमः ॥ ॐ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः ॥ ४ ॥ ॐ ओं पं फं बं भं मं औं कनिष्ठकाभ्यां नमः ॥५॥ ॐ अं यं रं लं वं शं पं सं हं लं क्षं अः करतलकरपृष्ठाभ्यां नमः॥६॥ इति करन्यासः॥ एवं हृदयादि॥ ॐ अं कं ५ आं हृदयाय नमः ॥१॥ ॐ इं चं ५ ईं शिरसे स्वाहा ॥२॥ ॐ उं टं ५ ऊं शिखायै वषट् ॥३॥ ॐ एं तं ५ ऐं कवचाय हुं ॥४॥ ॐ ओं पं ५ औं नेत्रत्रयाय वौषट् ॥५॥ ॐ अं यं रं लं वं शं पं सं हं लं क्षं अः अस्त्रायफट् ॥६॥ इति हृदयादिन्यासः॥ ततः कण्ठस्य षोडषदलपद्मे (ॐ अं नमः एवं क्रमेण सर्वत्र) ॐ आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः इति षोड्प स्वरान्न्यसेत् ॥१॥ पुनः हृदिस्थ द्वादशदले ॐ कं नमः एवं खं गं घं ङं चं छं जं झं ञं टं ठं नमः ॥ इति द्वादश वर्णान् विन्यसेत् ॥२॥ ततः नाभौ दश दले–ॐ डं नमः इति एवं ढं णं तं थं दं धं नं पं फं नमः ॥ इति दशवर्णान्न्यसेत् ॥३॥ तदधोलिंगे षड्दले–ॐ बं नमः एवं ॐ भं मं यं रं लं इति षड् वर्णान् विन्यसेत् ॥ ४ ॥ आधारे (गुदे) चतुर्दले–ॐ वं नमः एवं शं पं सं इति चतुर्वर्णान्न्यसेत् ॥५॥ पुनः ललाटे द्विदले–ॐ हं नमः॥ ॐ क्षं नमः द्वौवर्णौ न्यसेत् ॥६॥ इति न्यासं कृत्वा ध्यायेत् ॥ आधारे लिङ्गनाभौ प्रकटितहृदये तालुमूले ललाटे ॥ द्वे पत्रे षोडशारे द्विदश दशदले द्वादशार्द्धे चतुष्के ॥ वासान्तेबालमध्ये डफकरसहिते कण्ठदेशे

स्वराणां हं क्षं तत्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ इत्यन्तरमातृकान्यासः ॥

## अथ वहिर्मातृका न्यासः ॥

जयार्थं सर्वदेवानां विन्यासे च लिपेर्विना ॥ कृतेतद्धि-फलं विद्याचदादौतु लिपिंन्यसेत् ॥ ॐ अस्यश्री वहिर्मातृकान्यासमन्त्रस्य ब्रह्मा ऋषिः गायत्री छन्दः मातृकासरस्वती देवीदेवता हलोबीजानि स्वराः शक्तयः क्षं कीलकं अखिलाप्तये न्यासे विनियोगः ॥ प्राणायामं कुर्यात् ॥ तथा च इड्या अ इ उ ऋ लृ ए ऐ ओ औ अं अः एभिः स्वरैः पूरयेत् ॥ पुनः कु चु टु तु पु एभिः पंचवर्गकेन कुम्भयेत् ॥ पुनः अष्टभिः य र ल व श ष स ह आदिना रेचयेत् ॥ इति प्राणायामं कृत्वा ऋष्यादि न्यासं कुर्यात् ॥ तथा च ॐ अं ब्रह्मणे ऋषये नमः आं शिरसि ॥ ॐ इं गायत्रीछन्दसे नमः ईं मुखे ॥ ॐ उं सरस्वती देवतायै नमः ऊं हृदि ॥ ॐ एं हलभ्यो बीजेभ्यो नमः ऐं गुह्ये ॥ ॐ ओं स्वरेभ्यो शक्तिभ्यो नमः औं पादयोः ॥ ॐ अं क्षं कीलकाय नमः अः सर्वाङ्गे ॥ इनि ऋष्यादि न्यासः ॥ ॐ अं कं ५ अङ्गुष्ठाभ्यां नमः, हृदयाय० ॥ ॐ इं चं ५ ईं तर्जनीभ्यां, शिरसे० ॥ ॐ उं टं ५ ऊं मध्यमाभ्यां० शिखायै-वषट् ॥ ॐ एं तं ५ ऐं अनामिका०, कवचाय हुं ॥ ॐ ओं पं ५ औं

कनिष्ठकाभ्यां० नेत्रत्रयायवौषट्॥ ॐ अं यं रं लं वं शं षं सं हं लं क्षं अः करतलकरपृष्ठाभ्यां०, अस्त्रायफट्॥ ततो बहिर्मातृका न्यासं कुर्यात् ॥ ॐ अं नमः शिरसि ॥ ॐ आं नमः मुखे ॥ ॐ इं नमः दक्षिण नेत्रे ॥ ॐ ईं नमः वामनेत्रे ॥ ॐ उं नमो दक्षिण कर्णे॥ ऊं नमः वाम कर्णे ॥ ॐ ऋं नमः दक्षिणनासापुटे ॥ ॠं नमः वामनासापुटे॥ ॐ लृं नमः दक्षिणकपोले ॥ ९ ॥ ॐ लॄं नमः वामकपोले॥ ॐ एं नमः ऊर्ध्वोष्ठे ॥ ॐ ऐं नमः अधरोष्ठे ॥ ॐ ओं नमः ऊर्ध्वदन्तपंक्तौ ॥ ॐ औं नमः अधोदन्तपंक्तौ ॥ ॐ अं नमः मूर्द्धिन ॥ ॐ अः नमः मुखवृत्ते ॥ ॐ कं नमः दक्षिणबाहुमूले ॥ ॐ खं नमः दक्षिण कूर्परे ॥ ॐ गं नमः दक्षिण मणिबन्धे ॥ ॐ घं नमः दक्षिण हस्तांगुलिमूले ॥ ॐ ङं नमः दक्षिण हस्तांगुल्यग्रे ॥ ॐ चं नमः वामबाहुमूले॥ ॐ छं नमः वाम कूर्परे ॥ ॐ जं नमः वाम मणिबन्धे॥ ॐ झं नमः वाम हस्तांगुलिमूले ॥ ॐ ञं नमः वाम हस्तांगुल्यग्रे॥ ॐ टं नमः दक्षिण पादमूले ॥ ठं नमः दक्षिण जानुनि ॥ ॐ डं नमः द० गुल्फे ॥ ॐ ढं नमः दक्षिण पादांगुलि मूले ॥ ॐ णं नमः दक्षिण पादाङ्गुल्यग्रे॥ ॐ तं नमः वाम पादमूले ॥ ॐ थं नमः वामजानुनि ॥ दं नमः वामगुल्फे ॥ ॐ धं नमः वाम पादाङ्गुलिमूले ॥ ॐ नं नमः वाम पादांगुल्यग्रे ॥ ॐ पं नमः दक्षिण

पार्श्वे ॥ ॐ फं नमः वाम पार्श्वे ॥ ॐ वं नमः पृष्ठे ॥ ॐ भं नमः नाभौ ॥ ॐ मं नमः उदरे ॥ ॐ यं त्वगात्मने नमः हृदि ॥ ॐ रं असृगात्मने नमः दक्षांसे ॥ ॐ लं मांसात्मने नमः ककुदि ( गर्दन में ) ॐ वं मेदात्मने नमः वामांसे ॥ शं अस्थ्यात्मने नमः हृदयादि दक्ष हस्तान्तम् ॥ ॐ षं मज्जात्मने नमः हृदयादि वाम हस्तान्तम् ॥ ॐ सं शुक्रात्मने नमः हृदयादि दक्षपादान्तम् ॥ ॐ हं आत्मने नमः हृदयादि वाम पादान्तम् ॥ ॐ लं परमात्मने नमः जठरे ॥ ॐ क्षं प्राणात्मने नमः मुखे ॥ इति विन्यस्य ॥

अथ ध्यानम् ॥

ॐ पञ्चाशल्लिपिभिर्विभक्तमुखदोः पत्सन्धिवक्षस्थलां भास्वन्मौलिनिबद्ध चन्द्रशकलामापीनतुङ्गस्तनीम् ॥ मुद्रामक्षगुणंसुदाढ्यं कलशं विद्यां च हस्ताम्बुजैर्बिभ्राणांविशदप्रभां त्रिनयनांवाग्देवतामाश्रये ॥

इति बहिर्मातृकान्यासः ॥

---

ब्रह्मचारी, स्थिति संहार एवं सृष्टि क्रम से करे। गृहस्थ संहार, सृष्टि, और स्थिति क्रम से करे यति एवं वाणप्रस्थ सृष्टि, स्थिति और संहार क्रम से करे। यह क्रम मेरुतन्त्र में लिखा है, जो भूत शुद्धि करने में असक्त है वह वों ह्रीं १०८ बार जपे।

## अथ * स्थितिन्यासः ॥

ध्यानम् ॥ सिन्दूरकान्तिमसिताभरणां त्रिनेत्रां विद्याक्ष सूत्रमृगपोतवरंदधानां ॥ पार्श्वस्थितां भगवतीं मपिकाब्ज नाङ्गीं ध्याये कराब्जघृत पुस्तकवर्णमालाम् ॥ ऐं भं नमः नाभौ ॥ ऐं बं नमः पृष्ठे ॥ ऐं फं नमः वाम पार्श्वे ॥ ऐं पं नमः दक्षिण पार्श्वे ॥ ऐं नं नमः वाम पादाङ्गुल्यग्रे ॥ ऐं धं नमः वाम पादाङ्गुलि मूले ॥ ऐं दं नमः वाम गुल्फे ॥ ऐं थं नमः वाम जानुनी ॥ ऐं तं नमः वाम पाद मूले ॥ ऐं णं नमः दक्षिण पादाङ्गुल्यग्रे ॥ ऐं ढं नमः दक्षिण पादांगुलि मूले ॥ ऐं डं नमः दक्षिण गुल्फे ॥ ऐं ठं नमः दक्षिण जानुनि ॥ ऐं टं नमः दक्षिण पाद मूले ॥ ऐं ञं नमः वाम हस्तांगुल्यग्रे ॥ ऐं झं नमः वाम हस्तांगुलि मूले ॥ ऐं जं नमः वाम मणिबन्धे ॥ ऐं छं नमः वाम कूर्परे ॥ ऐं चं नमः वाम बाहु मूले ॥ ऐं ङं

---

मन्त्रतन्त्रप्रकाशे.-छनाभावारभ्य ते यस्तु हृदये च समाप्यते । स्थितिन्यासः स विज्ञेयो दृष्टादृष्ट फलप्रदः ॥ संहृतेर्दोषसंहारः सृष्टेश्च सुतपुष्टिदः ॥ स्थितिस्तु शान्तिविन्यासस्तस्मात्कार्यस्त्रिधा च सः ॥ स्थितिन्यासो गृहस्थानां सुदिष्टः सर्वसिद्धिदः ॥ प्रथमाश्रमिणां न्यासं उत्पत्तिः समुदाहृतः ॥ यतीनां च वनस्थानां संहारः समुदाहृतः ॥ विरक्तस्य गृहस्थस्य संहारोपि विधीयते ॥ सपत्नीक वनस्थानां स्थितिन्यासो विधीयते ॥ विद्यार्थिनामथैतेषां सृष्टयन्योपि विशिष्यते ॥

नमः दक्षिण हस्तांगुल्यग्रे ॥ ऐं घं नमः दक्षिण हस्तांगुलि मूले ॥ ऐं गं नमः दक्षिण मणिबन्धे ॥ ऐं खं नमः दक्षिण कूर्परे ॥ ऐं कं नमः दक्षिण बाहु मूले ॥ ऐं अः नमः मुखे ॥ ऐं अं नमः मूर्द्धि्न ॥ ऐं औं नमः अधो दन्त पंक्तौ ॥ ऐं ओं नमः ऊर्ध्व दन्तपंक्तौ ॥ ऐं ऐं नमः अधरोष्ठे ॥ ऐं एं नमः ऊर्ध्वोष्ठे ॥ ऐं ॡं नमः वाम गंडे ॥ ऐं ऌं नमः दक्ष गंडे ॥ ऐं ॠं नमः वाम नासायां ॥ ऐं ऋं नमः दक्ष नासायां ॥ ऐं ऊं नमः वाम कर्णे ॥ ऐं उं नमः दक्षिण कर्णे ॥ ऐं ईं नमः वाम नेत्रे ॥ ऐं इं नमः दक्षिण नेत्रे ॥ ऐं आं नमः मुखवृत्ते ॥ ऐं अं नमः ललाटे ॥ ऐं लं परमात्मने नमः हृदयादिमस्तकान्तम् ॥ ऐं हं आत्मने नमः हृदयादि वाम पादान्तम् ॥ ऐं सं शुक्रात्मने नमः हृदयादि दक्ष पादान्तम् ॥ ऐं पं मज्जात्मने नमः हृदयादि वाम भुजान्तम् ॥ ऐं शं अस्थ्यात्मने नमः हृदयादि दक्ष भुजान्तम् ॥ ऐं वं मेदात्मने नमः वामांसे ॥ ऐं लं मांसात्मने नमः ककुदि ( गर्दन में ) ऐं रं असृगात्मने नमः दक्षांसे ॥ ऐं यं त्वगात्मने नमः हृदि ॥ इति स्थिति क्रम न्यासः ॥

## अथ सृष्टिन्यास क्रमः ॥

तत्र तु विमर्गान्वितः प्रणवपुटितो वा माया लक्ष्मी बीजपुटितो वा वाग्भवाद्यो वा न्यस्तव्यः ॥ ध्यानम् ॥ पञ्चाशदर्णै रचिताङ्गभागां धृतेन्दुखण्डा कुमुदावदाताम् ॥

वराभये पुस्तकमक्षसूत्रं भजे गिरंसन्दधतीं त्रिनेत्राम् ॥ त वाग्भवाद्यो यथा* ऐं अं नमः ललाटे ॥ ऐं आं नमः मुख वृत्ते ॥ ऐं इं नमः दक्ष नेत्रे ॥ ऐं ईं नमः वाम नेत्रे ॥ ऐं उं नमः दक्ष कर्णे ॥ ऐं ऊं नमः वाम कर्णे ॥ ऐं ऋं नमः दक्ष नासायां ॥ ऐं ॠं नमः वाम नासायां ॥ ऐं लृं नमः दक्ष गंडे ॥ ऐं ॡं नमः वाम गंडे ॥ ऐं एं नमः ऊर्ध्वोष्ठे ॥ ऐं ऐं नमः अधरोष्ठे ॥ ऐं ओं नमः ऊर्ध्व दन्तपंक्तौ ॥ ऐं औं नमःअधो दन्तपंक्तौ ॥ ऐं अं नमः मूर्द्धिन ॥ ऐं अः नमः मुखे ॥ ऐं कं नमः दक्ष वाहु मूले ॥ ऐं खं नमः दक्ष कूर्परे ॥ ऐं गं नमः दक्ष मणिबन्धे ॥ ऐं घं नमः दक्ष हस्तांगुलि मूले ॥ ऐं ङं नमः दक्ष हस्तांगुल्यग्रे ॥ ऐं चं नमः वाम वाहु मूले ॥ ऐं छं नमः वाम कूर्परे ॥ ऐं जं नमः वाम मणिबन्धे ॥ ऐं झं नमः वाम हस्तांगुलि मूले ॥ ऐं ञं नमः वाम हस्तांगुल्यग्रे ॥ ऐं टं नमः दक्षिण पाद मूले ॥ ऐं ठं नमः दक्षिण जानुनि ॥ ऐं डं नमः दक्षिण गुल्फे ॥ ऐं ढं नमः दक्षिण पादांगुलिमूले ॥ ऐं णं नमः दक्ष पादांगुल्यग्रे ॥ ऐं तं नमः वाम पाद मूले ॥ ऐं थं नमः वाम जानुनि ॥ ऐं दं नमः वाम गुल्फे ॥ ऐं धं नमः वाम पादांगुलि मूले ॥ ऐं नं नमः वाम पादांगुल्यग्रे ॥ ऐं पं

* वीर चूड़ामणि तन्त्रानुसारतः ॥ विद्याकामेन वाग्भवाद्यः ॥ लक्ष्मीकामेन रमा बीजाद्यः ॥ शक्तिकामेन मायाद्यः ॥ स्त्रीकामेन स्त्री बीजाद्यः ॥ मोक्षकामेन विपरीताद्यः ॥

नमः दक्षिण पार्श्वे ॥ ऐं फं नमः वाम पार्श्वे॥ ऐं बं नमः पृष्ठे ॥ ऐं भं नमः नाभौ ॥ ऐं मं नमः उदरे ॥ ऐं यं त्वगात्मने नमः हृदि ॥ ऐं रं असृगात्मने नमः दक्षांसे ॥ ऐं लं मांसात्मने नमः ककुदि (गर्दनमें)॥ ऐं वं मेदात्मने नमः वामांसे॥ ऐं शं अस्थ्यात्मने नमः हृदयादि दक्षभुजान्तम्॥ ऐं षं मज्जात्मने नमः हृदयादि वाम भुजान्तम्॥ ऐं सं शुक्रात्मने नमः हृदयादि दक्ष पादान्तम् ॥ऐं हं आत्मने नमः हृदयादि वाम पादान्तम् ॥ ऐं लं परमात्मने नमः हृदयादि मस्तकान्तम् ॥ इति सृष्टिन्यास क्रमः ॥

## अथ संहारन्यास क्रमः ॥

ध्यानम् ॥ अक्षस्रजं हरिणपोतमुदग्रटंकं विद्यांकरै रविरतं दधतींत्रिनेत्रां॥ अर्द्धेन्दुमौलिमरुणामरविन्दवासां वर्णेश्वरीं च प्रणुमःस्तनभारखिन्नाम् ॥ पूर्वोक्त स्थानेपु विलोमं मातृकान्यसेत् ॥ ऐं क्षँ परमात्मने नमः हृदयादिमस्तकान्तम्॥ऐं हँ आत्मने नमः हृदयादि वामपादान्तम्॥ ऐं सँ शुक्रात्मनेनमः हृदयादि दक्षपादान्तम् ॥ ऐं षँ मज्जात्मने नमः हृदयादि वामहस्तान्तम् ॥ ऐं शँ अस्थ्यात्मने नमः हृदयादि दक्षहस्तान्तम् ॥ ऐं वँ मेदात्मने नमः वामांसे॥ ऐं लँ मांसात्मने नमः ककुदि (गर्दन में) ॥ ऐं रँ असृगात्मने नमः दक्षांसे ॥ ऐं यँ त्वगात्मने नमः हृदि ॥ ऐं मँ नमः उदरे ॥ ऐं भँ नमः नाभौ ॥ ऐं बँ नमः पृष्ठे॥

ऐं फँ नमः वाम पार्श्वे ॥ ऐं पँ नमः दक्षिण पार्श्वे ॥ ऐं नँ नमः वाम पादांगुल्यग्रे ॥ ऐं धँ नमः वाम पादांगुलि मूले ॥ ऐं दँ नमः वामगुल्फे ॥ ऐं थँ नमः वाम जानुनि॥ ऐं तँ नमः वामपादमूले। ऐं णं नमः दक्षपादांगुल्यग्रे ॥ ऐं ढँ नमः दक्ष पादांगुलि मूले ॥ ऐं डँ नमः दक्षगुल्फे ॥ ऐं ठँ नमः दक्ष जानुनि ॥ ऐं टँ नमः दक्ष पाद मूले ॥ ऐं ञँ नमः वाम हस्तांगुल्यग्रे॥ ऐं झँ नमः वाम हस्तांगुलि मूले ॥ ऐं जँ नमः वाम मणिबन्धे ॥ ऐं छं नमः वाम कूर्परे ॥ ऐं चँ नमः वामबाहु मूले ॥ ऐं ङँ नमः दक्ष हस्तांगुल्यग्रे ॥ ऐं घँ नमः दक्ष हस्तांगुलि मूले ॥ ऐं गं नमः दक्ष मणिबन्धे॥ ऐं खँ नमः दक्ष कूर्परे ॥ ऐं कँ नमः दक्ष बाहु मूले॥ ऐं अः नमः मुखवृत्ते। ऐं अँ नमः मूर्द्धि न ॥ ऐं औं नमः अधो दन्तपंक्तौ ॥ ऐं ओं नमः ऊर्ध्व दन्तपंक्तौ ॥ ऐं ऐं नमः अधरोष्ठे॥ ऐं ए नमः ऊर्ध्वोष्ठे ॥ ऐं लॄं नमः वाम गंडे ॥ ऐं लँ नमः दक्ष गंडे ॥ ऐं ॠं नमः वाम नासायां ॥ ऐं ऋँ नमः दक्ष नासायां ॥ ऐं ऊं नमः वाम कर्णे॥ ऐं उं नमः दक्ष कर्णे ॥ ऐं ईं नमः वाम नेत्रे ॥ ऐं इं नमः दक्ष नेत्रे ॥ ऐं आँ नमः मुखवृत्ते ॥ ऐं अँ नमः ललाटे ॥

## अथ * शिवकला मातृकान्यासः ॥

ॐ अस्य श्रीशिवकला मातृकान्यास मन्त्रस्य दक्षिणा मूर्ति ऋषिर्गायत्रीछन्दः अर्द्धनारीश्वरो देवता हलो बीजानि स्वराः शक्तयः स्वाभीष्टसिद्धये जपे विनियोगः॥ ॐ दक्षिणामूर्ति ऋषये नमः शिरसि ॥ ॐ गायत्री छन्दसे नमः मुखे ॥ ॐ अर्द्धनारीश्वरो देवतायै नमः हृदि ॥ ॐ हल्भ्यो बीजेभ्यो नमः गुह्ये ॥ ॐ स्वरेभ्यो शक्तिभ्यो नमः पादयोः ॥ ॐ विनियोगाय नमः सर्वाङ्गे ॥ इति ऋष्यादि न्यासः ॥

## अथ हृदयादि न्यासः ॥

ॐ ह्सां अङ्गुष्ठाभ्यां नमः, हृदयाय नमः॥ ॐ ह्सीं तर्जनीभ्यां नमः, शिरसे स्वाहा ॥ ॐ ह्सूँ मध्यमाभ्यां नमः, शिखायैवषट् ॥ ॐ ह्सैं अनामिकाभ्यां नमः, कवचायहुम् ॥ ॐ ह्सौं कनिष्ठकाभ्यां नमः नेत्रत्रयाय-वौषट्॥ ॐ ह्सः करतल करपृष्ठाभ्यां नमः, अस्त्रायफट्॥

## अथ ध्यानम् ॥

[१] पाशाङ्कुशवराक्षस्रक्पाणि शीतांशु शेखरम्॥ त्र्यक्ष रक्त सुवर्णाभमर्द्धनारीश्वरं भजे ॥ ऐं ह्सौं श्रं श्रीकण्ठेश-

---

* श्रीकण्ठादीन्छम्भुभक्तः कुर्यान्न्यासादिकन्तथा (मन्त्रमहोदधौ २१ तरंगे) ॥

भट-१ पाशाङ्कुशौ वामयोः ॥ रक्तो हरांशः, सुवर्णाभः देव्यंशः

पूर्णोदरीभ्यां नमः ललाटे ॥ ऐं ह्सौं आं अनन्ताय विरजयाभ्यां नमः मुखवृत्ते॥ ऐं ह्सौं इँ सूक्ष्मेश शाल्मलीभ्यां नमः दक्ष नेत्रे ॥ ऐं ह्सौं ईं त्रिमूर्तीश लोलाक्षीभ्यां नमः वाम नेत्रे ॥ ऐं ह्सौं उँ अमरेश वर्तुलाक्षीभ्यां नमः दक्ष कर्णे ॥ ऐं ह्सौं ऊँ अर्घीश घोषणाभ्यां नमः वामकर्णे॥ ऐं ह्सौं ऋँ भारभूतेश दीर्घमुखीभ्यां नमः दक्ष नासापुटे ॥ ऐं ह्सौं ॠँ तिथीश गोमुखीभ्यां नमः वाम नासापुटे ॥ ऐं ह्सौं लृँ स्थाएवीश दीर्घ जिह्वाभ्यां नमः दक्ष गंडे ॥ ऐं ह्सौं लॄँ हरः श्रीकण्ठेश कुण्डोदरीभ्यां नमः वाम गंडे॥ ऐं ह्सौं एँ झिंटीश ऊर्ध्वकेशीभ्यां नमः ऊर्ध्वोष्ठे ॥ ऐं ह्सौं ऐं भौतिकेश विकृतमुखीभ्यां नमः अधरोष्ठे ॥ ऐं ह्सौं ओं सद्योजाताय ज्वालामुखीभ्यां नमः ऊर्ध्व दन्त पंक्तौ ॥ ऐं ह्सौं औं अनुग्रहेश उल्कामुखीभ्यां नमः अधो दन्तपंक्तौ ॥ ऐं ह्सौं अँ अक्रूरेश श्रीमुखीभ्यां नमः शिरसि॥ ऐं ह्सौं अः महासेनेश विद्यामुखीभ्यां नमः मुखे ॥ ऐं ह्सौं कँ क्रोधीश महाकालीभ्यां नमः जिह्वाग्रे ॥ ऐं ह्सौं खँ चण्डेश सरस्वतीभ्यां नमः कण्ठदेशे ॥ ऐं ह्सौं गँ पञ्चान्तकेश सर्वसिद्धि गौरीभ्यां नमः दक्ष बाहुमूले ॥ ऐं ह्सौं घं शिवोत्तमेश त्रैलोक्येश विद्याभ्यां नमः दक्ष कूर्परे ॥ ऐं ह्सौं ङँ एकरुद्रेश मन्त्रशक्तिभ्यां नमः दक्ष मणिबन्धे ॥ ऐं ह्सौं चँ कूर्मेश आत्मशक्तिभ्यां नमः दक्ष

हस्ताङ्गुलि मूले ॥ ऐं ह्सौं छँ एकनेत्रेश भूतमातृभ्यां नमः दक्ष हस्ताङ्गुल्यग्रे ॥ ऐं ह्सौं जं चतुराननेश लम्बोदरीभ्याँ नमः वाम बाहुमूले ॥ ऐं ह्सौं झँ अजेश द्राविणीभ्याँ नमः वाम कूर्परे ॥ ऐं ह्सौं ञँ सर्वेश नागरीभ्याँ नमः वाम मणिबन्धे ॥ ऐं ह्सौं टँ सोमेश खेचरीभ्याँ नमः वाम हस्ताङ्गुलि मूले ॥ ऐं ह्सौं ठँ लाँगलीश मञ्जरीभ्यां नमः वामहस्ताङ्गुल्यग्रे ॥ ऐं ह्सौं डं दारकेश रूपिणीभ्याँ नमः दक्ष जानुनि ॥ ऐं ह्सौं ढँ अर्द्धनारीशवीरिणीभ्याँ नमः दक्ष पाद मूले ॥ ऐं ह्सौं णँ उमाकान्तेश काकोदरीभ्याँ नमः दक्षपाद गुल्फे ॥ ऐं ह्सौं तं आषाढीश पूतनाभ्याँ नमः दक्ष पादाङ्गुलि मूले ॥ ऐं ह्सौं थँ चण्डीश भद्र-कालीभ्यां नमः दक्ष पादाँगुल्यग्रे ॥ ऐं ह्सौं दं अन्त्रीश योगिनीभ्याँ नमः वाम पाद मूले ॥ ऐं ह्सौं धँ मीनेश शंखिनीभ्याँ नमः वाम जानौ ॥ ऐं ह्सौं नं मेशेप तर्जनीभ्याँ नमः वाम गुल्फे ॥ ऐं ह्सौं पँ लोहितेश काल-रात्रीभ्याँ नमः वाम पादांगुलि मूले ॥ ऐं ह्सौं फं शिखीश कुब्जिनीभ्याँ नमः वाम पादांगुल्यग्रे ॥ ऐं ह्सौं बं छागलण्डेश कपर्दिनीभ्याँ नमः दक्ष पार्श्वे ॥ ऐं ह्सौं भँ द्विरंडेश वज्रीभ्याँ नमः वाम पार्श्वे ॥ ऐं ह्सौं मं महाकालेश जयाभ्यां नमः पृष्ठे ॥ ऐं ह्सौं यं त्वगात्म-भ्याँ वालीश सुमुखेश्वरीभ्याँ नमः उदरे ॥ ऐं ह्सौं रँ

अस्थ्यात्मभ्यां भुजगेश रेवतीभ्यां नमः हृदि ॥ ऐं ह्सौं लं मांसात्मभ्यां पिनाकीश माधवीभ्यां नमः दक्षांसे ॥ ऐं ह्सौं वं मेदआत्मभ्यां खड्गीश वारुणीभ्यां नमः ककुदि (गर्दन में) ऐं ह्सौं शं अस्थ्यात्मभ्यां वकेश वायवीभ्यां नमः वामांसे ॥ ऐं ह्सौं षं मज्जात्मभ्यां श्वेतेश रक्षोविदारिणीभ्यां नमः हृदयादि दक्ष हस्तान्तम् ॥ ऐं ह्सौं सँ शुक्रात्मभ्यां भृग्वीश सहजयाभ्यां नमः हृदयादि वाम हस्तान्तम् ॥ ऐं ह्सौं हँ प्राणात्मभ्यां नकुलीश लक्ष्मीभ्यां नमः हृदयादि दक्षपादान्तम् ॥ ऐं ह्सौं लँ शिवेश व्यापिनीभ्यां नमः हृदयादि वाम पादान्तम् ॥ ऐं ह्सौं क्षँ क्रोधात्मभ्यां संवर्तकेश महामायाभ्यां नमः हृदयादि मस्तकान्तम् ॥

अथ ऊर्ध्वाम्नाय तन्त्रोक्त ॥

## शिव षोढ़ान्यास प्रकारः ॥

### तत्र प्रथम मातृकान्यासः ॥

ॐ ऐं ह्रीं श्रीं अं प्रपञ्चरूपायै श्रियै नमः ॥ ॐ ऐं ह्रीं श्रीं आं बीजरूपायैमायायै नमः ॥ ॐ ऐं ह्रीं श्रीं इं जलधिरूपायै कमलायै नमः ॥ ॐ ऐं ह्रीं श्रीं ईं गिरिरूपायै विष्णुवल्लभायै नमः ॥ ॐ ऐं ह्रीं श्रीं उं पत्तनरूपायै पद्मधारिण्यै नमः ॥ ॐ ऐं ह्रीं श्रीं ऊं पीठरूपायै समुद्रतनयायै नमः ॥ ॐ ऐं ह्रीं श्रीं ऋं क्षेत्ररूपायै लोकमात्रे नमः॥ ॐ ऐं ह्रीं श्रीं ॠं वनरूपायै कमल वासिन्यै नमः ॥ ॐ ऐं

ह्रीं श्रीं ऌं आश्रमरूपायै इन्दिरायै नमः ॥ ॐ ऐं ह्रीं श्रीं ॡं गुहारूपायै मात्रे नमः ॥ ॐ ऐं ह्रीं श्रीं एं नदीरूपायै रमायै नमः ॥ ॐ ऐं ह्रीं श्रीं ऐं चत्वरकरूपायै लक्ष्म्यै नमः ॥ ॐ ऐं ह्रीं श्रीं ओं उद्भिजरूपायै नारायणप्रियायै नमः ॥ ॐ ऐं ह्रीं श्रीं औं स्वेदजरूपायै सिद्धि लक्ष्म्यै नमः ॥ ॐ ऐं ह्रीं श्रीं अं जरायुजरूपायै राजलक्ष्म्यै नमः ॥ ॐ ऐं ह्रीं श्रीं अः अण्डजरूपायै महालक्ष्म्यै नमः ॥ ॐ ऐं ह्रीं श्रीं कं लवरूपायै आर्यायै नमः ॥ ॐ ऐं ह्रीं श्रीं खं त्रुटिरूपायै उमायै नमः ॥ ॐ ऐं ह्रीं श्रीं गं कलारूपायै चण्डिकायै नमः ॥ ॐ ऐं ह्रीं श्रीं घं काष्ठारूपायै दुर्गायै नमः ॥ ॐ ऐं ह्रीं श्रीं ङं निमेषरूपायै शिवायै नमः ॥ ॐ ऐं ह्रीं श्रीं चं श्वासरूपायै अपर्णायै नमः ॥ ॐ ऐं ह्रीं श्रीं छं घटिकारूपायै अम्बिकायै नमः ॥ ॐ ऐं ह्रीं श्रीं जं मुहूर्तरूपायै सत्यै नमः ॥ ॐ ऐं ह्रीं श्रीं झं प्रहररूपायै ईश्वर्यै नमः ॥ ॐ ऐं ह्रीं श्रीं ञं दिवसरूपायै शाम्भव्यै नमः ॥ ॐ ऐं ह्रीं श्रीं टं संध्यारूपायै ईशान्यै नमः ॥ ॐ ऐं ह्रीं श्रीं ठं रात्रिरूपायै पार्वत्यै नमः ॥ ॐ ऐं ह्रीं श्रीं डं तिथिरूपायै सर्वमंगलायै नमः ॥ ॐ ऐं ह्रीं श्रीं ढं वाररूपायै दाक्षायण्यै नमः ॥ ॐ ऐं ह्रीं श्रीं णं नक्षत्ररूपायै हैमवत्यै नमः ॥ ॐ ऐं ह्रीं श्रीं तं योगरूपायै महामायायै नमः ॥ ॐ ऐं ह्रीं श्रीं थं करणरूपायै महेश्वर्यै नमः ॥

ॐ ऐं ह्रीं श्रीं दं पक्षरूपायै मृडान्यै नमः ॥ ॐ ऐं ह्रीं श्रीं धं मासरूपायै रुद्राण्यै नमः ॥ ॐ ऐं ह्रीं श्रीं नं राशिरूपायै शर्वाण्यै नमः ॥ ॐ ऐं ह्रीं श्रीं पं ऋतुरूपायै परमेश्वर्यै नमः ॥ ॐ ऐं ह्रीं श्रीं फं अयनरूपायै काल्यै नमः ॥ ॐ ऐं ह्रीं श्रीं बं वत्सररूपायै कात्यायन्यै नमः ॥ ॐ ऐं ह्रीं श्रीं भं युगरूपायै गौर्यै नमः ॥ ॐ ऐं ह्रीं श्रीं मं प्रलयरूपायै भवान्यै नमः ॥ ॐ ऐं ह्रीं श्रीं यं पंचभूतरूपायै ब्राह्म्यै नमः ॥ ॐ ऐं ह्रीं श्रीं रं तन्मात्ररूपायै वागीश्वर्यै नमः ॥ ॐ ऐं ह्रीं श्रीं लं ज्ञानरूपायै वाण्यै नमः ॥ ॐ ऐं ह्रीं श्रीं वं कर्मेन्द्रियरूपायै सावित्र्यै नमः ॥ ॐ ऐं ह्रीं श्रीं शं अनिलरूपायै सरस्वत्यै नमः ॥ ॐ ऐं ह्रीं श्रीं षं गुणरूपायै गायत्र्यै नमः ॥ ॐ ऐं ह्रीं श्री सं अन्तररूपायै वाक्प्रदायै नमः ॥ ॐ ऐं ह्रीं श्रीं हं करणारूपायै शारदायै नमः ॥ ॐ ऐं ह्रीं श्रीं लं अवस्थारूपायै भारत्यै नमः ॥ ॐ ऐं ह्रीं श्रीं क्षं दोषरूपायै विद्यात्मकायै नमः ॥ एतेषां-स्थाननियमो हृदयान्तः प्रकीर्तितः ॥ त्रितारमूल सकल प्रपञ्चादिस्वरूपतः ॥ आर्यैपराम्बादेव्यै नमः उक्त्वाव्यापकं चरेत् ॥ ॐ ऐं ह्रीं श्रीं प्रपञ्चरूपायै आर्यैपराम्बादेव्यै नमः अनेनव्यापकं कुर्यात् ॥

इति प्रथम मातृकान्यासः ॥

## द्वितीय भुवन न्यासः ॥

ॐ ऐं ह्रीं श्रीं अ आं इ अतल लोकनिलय शतकोटिगुह्या-ख्ययोगिनीमूल देवताधार शक्त्यम्बादेव्यै नमः पादयोः॥ ॐ ऐं ह्रीं श्रीं ईं उ ऊ वितल गुह्यतर अनन्तसंज्ञक शतकोटिगुह्या ख्ययोगिनीमूलदेवताधारशक्त्यम्बादेव्यै नमः गुल्फयोः । ॐ ऐं ह्रीं श्रीं ऋ ॠ ऌ सुतल अतिगुह्य अचिन्त्यसंज्ञक शत-कोटि गुह्याख्ययोगिनीमूलदेवताधारशक्त्यम्बादेव्यै नमः जंघयोः॥ ॐ ऐं ह्रीं श्रीं ॡ ए ऐं महातल महागुह्यस्वतन्त्रसंज्ञक शतकोटिगुह्याख्ययोगिनीमूलदेवताधारशक्त्यम्बादेव्यै नमः जान्वोः ॥ ॐ ऐं ह्रीं श्रीं ओं औ तलातलपरमगुह्य अभि-धानक शतकोटि गुह्याख्ययोगिनीमूल देवताधारशक्त्यम्बा-देव्यै नमः ऊर्वोः ॥ ॐ ऐं ह्रीं श्रीं अं अः रसातल रहस्य ज्ञानसंज्ञक शतकोटिगुह्याख्ययोगिनीमूलदेवताधारशक्त्य-म्बादेव्यै नमः गुह्यदेशे ॥ ॐ ऐं ह्रीं श्रीं कवर्ग पाताल-लोक निलयरहस्यनितराक्रियाशतकोटि गुह्याख्ययोगिनी-मूल देवताधारशक्त्यम्बादेव्यै नमः आधारे ।।१॥ ॐ ऐं ह्रीं श्रीं चवर्ग भूरहस्यातिरहस्य डाकिनी शतकोटि गुह्याख्ययोगिनीमूलदेवताधारशक्त्यम्बादेव्यै नमः स्वाधि-ष्ठानचक्रे ॥ ( लिङ्गोपरिदेशे ) पेड़ ॥ ॐ ऐं ह्रीं श्रीं

---

१—गुदामेढ्रान्तरालदेशे ॥

टवर्ग भूर्मीमहारहस्यराकिनी शतकोटिगुह्याख्ययोगिनी-मूल देवताधारशक्त्यम्बादेव्यै नमः नाभौ (मणिपूरचक्रे)॥ ॐ ऐं ह्रीं श्रीं तवर्ग स्व परमरहस्य लाकिनी शतकोटि गुह्याख्ययोगिनीमूल देवताधारशक्त्यम्बादेव्यै नमः हृदये ( अनाहत चक्रे ) ॐ ऐं ह्रीं श्रीं पवर्ग महागुह्यरहस्य-काकिनी शतकोटि गुह्याख्ययोगिनीमूल देवताधारशक्त्यम्बादेव्यै नमः तालुमूले (विशुद्धचक्रे) ॐ ऐं ह्रीं श्रीं यवर्ग जनो गुप्ततरशाकिनी शतकोटि गुह्याख्ययोगिनीमूल देवताधार-शक्त्यम्बादेव्यै नमः भ्रूमध्ये ( आज्ञाचक्रे ) ॐ ऐं ह्रीं श्रीं शवर्ग तपश्चाति गुह्यशाकिनी शतकोटिगुह्याख्ययोगिनीमूल देवताधारशक्त्यम्बादेव्यै नमः ललाटे ॥ ॐ ऐं ह्रीं श्रीं ळं क्षं सत्य महागुह्ययाकिनी शतकोटि गुह्याख्ययोगिनीमूल-देवताधारशक्त्यम्बादेव्यै नमः ब्रह्मरंध्रे ( परमशिवस्पृष्टे ) ॐ ऐं ह्रीं श्रीं चतुर्दश भुवनाधिपायै श्रीपराम्बादेव्यै नमः अनेन व्यापकं चरेत् ॥ इति द्वितीय भुवन न्यासः ॥

## तृतीय मूर्ति न्यासः ॥

ॐ ऐं ह्रीं श्रीं अं केशवाय अक्षायै नमः मस्तके ॥ ॐ ऐं ह्रीं श्रीं आं नारायणाय वलकायै नमः आनने ॥ ॐ ऐं ह्रीं श्रीं इं माधवाय इन्द्राण्यै नमः दक्षस्कन्धे ॥ ॐ ऐं ह्रीं श्रीं ईं गोविन्दाय ईशान्यै नमः वामस्कन्धे ॥ ॐ ऐं ह्रीं श्रीं उं विष्णवे उग्रायै नमः दक्षपार्श्वे ॥ ॐ ऐं ह्रीं श्रीं

ॐ मधुसूदनाय ऊर्ध्वनयनायै नमः वामपार्श्वे ॥ ॐ ऐं ह्रीं श्रीं ऋ त्रिविक्रमाय इच्छायै नमः दक्षकण्ठे ॥ ॐ ऐं ह्रीं श्रीं ॠं वामनाय रुपिण्यै नमः वामकण्ठे ॥ ॐ ऐं ह्रीं श्रीं लृं श्रीधराय मूकायै नमः दक्षऊर्वोः ॥ ॐ ऐं ह्रीं श्रीं लॄं हृषीकेशाय अनुनदायै नमः वामऊर्वोः ॥ ॐ ऐं ह्रीं श्रीं एं पद्मनाभाय एकनायिकायै नमः दक्षजानुनि ॥ ॐ ऐं ह्रीं श्रीं ऐं दामोदराय ऐं कारिण्यै नमः वामजानुनि ॥ ॐ ऐं ह्रीं श्रीं ओं वासुदेवाय उच्यवत्यै नमः दक्षजंघायां ॥ ॐ ऐं ह्रीं श्रीं औं संकर्षणाय सर्वकामायै नमः वाम जंघायां ॥ ॐ ऐं ह्रीं श्रीं अं प्रद्युम्नाय अञ्जनप्रभायै नमः दक्षपादे ॥ ॐ ऐं ह्रीं श्रीं अः अनिरुद्धाय अस्थिमाला धरायै नमः वामपादे ॥ ॐ ऐं ह्रीं श्रीं कं भवाय करभद्रायै फट् वामपादे ॥ ॐ ऐं ह्रीं श्रीं खं शर्वाय खचगलायै फट् दक्षपादे ॥ ॐ ऐं ह्रीं श्रीं गं रुद्राय गरिमायै फट् वाम पार्श्वे ॥ ॐ ऐं ह्रीं श्रीं घं पशुपतये आदिफलप्रदायै फट् दक्षपार्श्वे ॥ ॐ ऐं ह्रीं श्रीं ङं उग्राय छन्दोमय्यै फट् वामबाह्वोः ॥ ॐ ऐं ह्रीं श्रीं चं महादेवाय जगते फट् दक्षबाह्वोः ॥ ॐ ऐं ह्रीं श्रीं छं भीमाय स्थानायै फट् कण्ठे ॥ ॐ ऐं ह्रीं श्रीं जं ईशानाय ज्वलदे फट् पूर्व मुखे ॥ ॐ ऐं ह्रीं श्रीं झं तत्पुरुषाय नारायै फट् दक्षमुखे ॥ ॐ ऐं ह्रीं श्रीं ञं अघोराय ज्ञानदायै फट् पश्चिममुखे ॥ ॐ ऐं ह्रीं श्रीं टं सद्योजाताय टंकधरायै फट्

उत्तरमुखे ॥ ॐ ऐं ह्रीं श्रीं ठं वामदेवाय टं क्रूरयै फट् ऊर्ध्व मुखे ॥ ॐ ऐं ह्रीं श्रीं ढं ब्रह्मणे यक्षिण्यै नमः शिरसि ॥ ॐ ऐं ह्रीं श्रीं प्रजापतये रंजिन्यै नमः भ्रुवोः ॥ ॐ ऐं ह्रीं श्रीं णं वेधसे लक्ष्म्यै नमः नेत्रयोः ॥ ॐ ऐं ह्रीं श्रीं तं परमेष्ठिने वज्रिण्यै नमः मुखे ॥ ॐ ऐं ह्रीं श्रीं थं पितामहाय शशि धारिण्यै नमः गण्डयोः ॥ ॐ ऐं ह्रीं श्रीं दं विधात्रे पद्मा-धारलयायै नमः हृदि ॥ ॐ ऐं ह्रीं श्रीं धं विरिंचये सर्व नायिकायै नमः उदरे ॥ ॐ ऐं ह्रीं श्रीं नं स्रष्ट्रे हमितान-नायै नमः लिङ्गे ॥ ॐ ऐं ह्रीं श्रीं पं चतुराननाय ललितायै नमः ऊर्वोः ॥ ॐ ऐं ह्रीं श्रीं फं हिरण्यगर्भाय क्षमायै नमः पादयोः ॥ ॐ ऐं ह्रीं श्रीं ओं त्रिमूर्त्यात्मिकायै आर्यै पराम्बा-देव्यै नमः अनेन व्यापकं कुर्यात् ॥ इति तृतीय मूर्ति न्यासः ॥

## चतुर्थ मन्त्र न्यासः ॥

ॐ ऐं ह्रीं श्रीं एकलक्षकोटिभेदायै ॐ अं आं इं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै क ए ल ह्रीं एकलक्षकूटेश्वर्यम्बादेव्यै नमः आधारे ॥ ॐ ऐं ह्रीं श्रीं द्विलक्ष कोटिभेदायै ॐ ईं उं ऊं अखिलमन्त्राधिदेवतायै सकल फलप्रदायै आर्यै ह स क ल ह्रीं द्विकूटेश्वर्यम्बादेव्यै नमः लिङ्गे ॥ ॐ ऐं ह्रीं श्रीं त्रिलक्षकोटिभेदायै ॐ ऋं ॠं लृं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै ॐ स क ल

ह्रीं त्र्यादिकूटेश्वर्यम्बादेव्यै नमः नाभौ ॥ ॐ ऐं ह्रीं श्रीं चतुर्लक्षकोटिभेदायै ॐ लृं एं ऐं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै चन्द्रादिकूटेश्वर्यम्बादेव्यै नमः हृदि ॥ ॐ ऐं ह्रीं श्रीं पञ्चलक्षकोटिभेदायै ॐ ओं औं अं अः अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै सूर्यादिकूटेश्वर्यम्बादेव्यै नमः कण्ठे ॥ ॐ ऐं ह्रीं श्रीं षड्लक्षकोटिभेदायै ॐ कं खं गं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै स्कन्दादि कूटेश्वर्यम्बादेव्यै नमः भ्रुवोर्मध्ये ॥ ॐ ऐं ह्रीं श्रीं सप्तलक्षकोटिभेदायै ॐ घं ङं चं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै गणेशादिकूटेश्वर्यम्बादेव्यै नमः उन्मन्यां[१] ॥ ॐ ऐं ह्रीं श्रीं अष्टलक्षकोटिभेदायै ॐ छं जं झं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै बटुकादिकूटेश्वर्यम्बादेव्यै नमः नादे दक्षकर्णे॥ ॐ ऐं ह्रीं श्रीं नवलक्षकोटिभेदायै ॐ ञं टं ठं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै ब्रह्मादि कूटेश्वर्यम्बादेव्यै नमः वामकर्णे ॥ ॐ ऐं ह्रीं श्रीं दशलक्षकोटिभेदायै ॐ डं ढं णं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै विष्णवादिकूटेश्वर्यम्बादेव्यै नमः भ्रूमण्डले ॥ ॐ ऐं ह्रीं श्रीं एकादशलक्षकोटिभेदायै ॐ तं थं दं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै रुद्रादिकूटेश्वर्यम्बादेव्यै नमः

टि०—१ एकाग्र मन होय जब आंख थोड़ी सी खुली रहे।

ब्रह्मरन्ध्रे ॥ ॐ ऐं ह्रीं श्रीं द्वादशलक्षकोटिभेदायै धं नं पं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै वाण्यादि कूटेश्वर्यम्बादेव्यै नमः¹॥ ॐ ऐं ह्रीं श्रीं त्रयोदशलक्षकोटि भेदायै ॐ बं फं भं अखिलमन्त्राधिदेवतायै सकलफल प्रदायै आर्यै लक्ष्म्यादिकूटेश्वर्यम्बादेव्यै नमः¹ ॥ ॐ ऐं ह्रीं श्रीं चतुर्दशलक्षकोटिभेदायै ॐ मं यं रं अखिल-मन्त्राधिदेवतायै सकलफलप्रदायै आर्यै गौर्यादिकूटेश्वर्यम्बा देव्यै नमः¹ ॥ ॐ ऐं ह्रीं श्रीं पञ्चदशलक्षकोटिभेदायै ॐ लं वं शं अखिलमन्त्राधिदेवतायै सकलफलप्रदायै आर्यै दुर्गादिकूटेश्वर्यम्बादेव्यै नमः¹॥ ॐ ऐं ह्रीं श्रीं षोडश-लक्षकोटिभेदायै ॐ षं सं हं अखिलमन्त्राधिदेवतायै सकल फलप्रदायै आर्यै त्रिपुरादिषोडशाक्षरात्माखिलमन्त्राधि-देवतायै सकलफलप्रदायै आर्यै षोडशैश्वर्यम्बादेव्यै नमः¹ ॥ ॐ ऐं ह्रीं श्रीं सर्वमन्त्रात्मिकायै आर्यै पराम्बा-देव्यै नमः अनेन व्यापकं चरेत् ॥ इति चतुर्थ मन्त्रन्यासः॥

## पञ्चम देवन्यासः॥

ॐ ऐं ह्रीं श्रीं अं आं सहस्रकोटियोगिनी कुलसेवितायै निवृत्ताम्बादेव्यै नमः पादांगुष्ठयोः॥ सर्वत्र दक्षादिवामान्तं॥ ॐ ऐं ह्रीं श्रीं इं ईं इमां योगिनीप्रतिष्ठासेवितायै निवृत्ताम्बा देव्यै नमः गुल्फयोः ॥ ॐ ऐं ह्रीं श्रीं उं ऊं तपस्वी

1 टिप्पणी—२-६ सब हृदय में ॥

कूलविद्यासेविताये निवृताम्बादेव्यै नमः जंघयोः ॥ ॐ ऐं ह्रीं श्रीं ऋं ॠं शान्तकुल शान्तिसेविताये निवृताम्बा देव्यै नमः जान्वोः ॥ ॐ ऐं ह्रीं श्रीं लृं लॄं मुनिकूलशान्त्यतीत सेविताये निवृताम्बा देव्यै नमः ऊर्वोः ॥ ॐ ऐं ह्रीं श्रीं एं ऐं देवकूलहृल्लेखासेविताये निवृताम्बादेव्यै नमः कट्योः ॥ ॐ ऐं ह्रीं श्रीं ओं औं राक्षसकूल गगनसेविताये निवृताम्बा देव्यै नमः दक्षपार्श्वे ॥ ॐ ऐं ह्रीं श्रीं अं अः विद्याधर कूलरक्तासेविताये निवृताम्बादेव्यै नमः वामपार्श्वे ॥ ॐ ऐं ह्रीं श्रीं कं खं महोग्राभा कूलसेविताये निवृताम्बादेव्यै नमः स्तनयोः ॥ ॐ ऐं ह्रीं श्रीं गं घं साध्य कूलमहाकरालासेविताये निवृताम्बादेव्यै नमः वक्षस्थलयोः॥ ॐ ऐं ह्रीं श्रीं ङं चं अप्सरो जाया कूलसेविताये निवृताम्बादेव्यै नमः करयोः ॥ ॐ ऐं ह्रीं श्रीं छं जं गन्धर्व कूलविजयासेविताये निवृताम्बादेव्यै नमः स्कन्धयोः ॥ ॐ ऐं ह्रीं श्रीं झं ञं गुह्यक कूलसेविताये निवृताम्बादेव्यै नमः कर्णयोः ॥ ॐ ऐं ह्रीं श्रीं टं ठं पक्षकूलपराजिता सेविताये निवृताम्बादेव्यै नमः ऊर्ध्वे ॥ ॐ ऐं ह्रीं श्रीं डं ढं किन्नरकूलवामासेविताये निवृताम्बादेव्यै नमः *॥ ॐ ऐं ह्रीं श्रीं णं तं पन्नगकूलज्येष्ठासेविताये निवृताम्बादेव्यै नमः॥ ॐ ऐं ह्रीं श्रीं थं दं पितृकूलरौद्राम्बासेविताये निवृताम्बा-

* यहां से सर्वाङ्ग में॥

देव्यै नमः॥ ॐ ऐं ह्रीं श्रीं घं नं गणेशकुलमायासेवितायै निवृताम्बादेव्यै नमः ॥ ॐ ऐं ह्रीं श्रीं पं फं भैरवकुंडली कुलसेवितायै निवृताम्बादेव्यै नमः ॥ ॐ ऐं ह्रीं श्रीं वं भं वटुककाली कुलसेवितायै निवृताम्बादेव्यै नमः॥ ॐ ऐं ह्रीं श्रीं मं यं क्षेत्रेशकालरात्री कुलसेवितायै निवृताम्बादेव्यै नमः ॥ ॐ ऐं ह्रीं श्रीं रं लं प्रथमभगवंतीकुलसेवितायै निवृताम्बादेव्यै नमः॥ ॐ ऐं ह्रीं श्रीं वं शं ब्रह्मासर्वेश्वरा-कुलसेवितायै निवृताम्बादेव्यै नमः ॥ ॐ ऐं ह्रीं श्रीं षं स विष्णुसर्वज्ञाकुलसेवितायै निवृताम्बादेव्यै नमः ॥ ॐ ऐं ह्रीं श्रीं हं लं रुद्रसर्वकर्त्रीकुलसेवितायै निवृताम्बादेव्यै नमः ॥ ॐ ऐं ह्रीं श्रीं क्षं चराचरकुलशक्तिकुलसेवितायै निवृताम्बादेव्यै नमः ॥ ॐ ऐं ह्रीं श्रीं सर्वदेवतात्मिकायै आर्यपराम्बा देव्यै नमः अनेन व्यापकं चरेत् ॥

इति पञ्चम देवन्यासः ॥

## षष्ठ मातृका भैरव न्यासः ॥

ॐ ऐं ह्रीं श्रीं कवर्गानन्तकोटिभूचरीकुलसेवितायै आं क्षां मंगलाम्बादेव्यै नमो द्रां क्षां ब्रह्माणीम्बादेव्यै अनन्तकोटि भूतसेवितायै अं क्षं मंगलनाथाय अं क्षं असिताङ्ग भैरवाय नमो मूलाधारचक्रे ॥ ॐ ऐं ह्रीं श्रीं चवर्गानन्तकोटि खेचरीकुल सेवितायै ईं णीं चारुचर्चिका महे-

श्वर्यम्बादेव्यै नमो द्रां क्षां वेतालाम्बादेव्यै अनन्तकोटि-वेतालसेवितायै म इं लां चर्चिकनाथाय इं लं रु रु भैरवाय नमः लिङ्गे (स्वाधिष्ठान चक्रे) ॥ ॐ ऐं ह्रीं श्रीं टवर्गानन्तकोटिपातालचरीकूलसेवितायै ऊं ह्रां योगेश्वराम्बादेव्यै नमो द्रांक्षां कौमार्यम्बादेव्यै अनन्तकोटि-पिशाचसेवितायै उं हं योगेशनाथाय उं हं चण्डभैरवाय नमः नाभौ, ( मणिपूरचक्रे )॥ ॐ ऐं ह्रीं श्रीं तवर्गानन्त-कोटिदिग्चरीकूलसेवितायै ऋं सां हरसिद्धान्ताम्बादेव्यै नमो द्रां क्षां वैष्णव्यम्बादेव्यै ··· अनन्तकोटिअपस्मार-सेवितायै ऋं सं हरसिद्धान्तनाथाय ऋं सं क्रोधभैरवाय नमः हृदये ( अनाहतचक्रे ) ॥ ॐ ऐं ह्रीं श्रीं पवर्गानन्तकोटि-सहचरीकूलसेवितायै लृं पां भट्टिकावाद्यम्बादेव्यै नमो द्रां क्षां अम्बादेव्यै अनन्तकोटिब्रह्मराक्षससेवितायै लृं पं भट्ट-नाथाय लृं पं उन्मत्तभैरवाय नमः कण्ठे (विशुद्धचक्रे) ॥ ॐ ऐं ह्रीं श्रीं यवर्गानन्तकोटिदिविचरीकूलसेवितायै ऐं शां किलिकिल्यम्बादेव्यै नमो द्रांक्षां इन्द्राण्यम्बा देव्यै अनन्तकोटि चेटकसेवितायै एं शं किलिनाथाय एं शं कापालिभैरवाय नमः भ्रूमध्ये ( आज्ञाचक्रे ) ॥ ॐ ऐं ह्रीं श्रीं शवर्गानन्तकोटिवनचरीकूलसेवितायै औं चां देविकालाम्बादेव्यै नमो द्रां क्षां रात्र्यम्बादेव्यै अनन्तकोटि चामुण्डासेवितायै ॐ वं कालरात्रिनाथाय ॐ

वं भीषणभैरवाय नमः भालतले भ्रूमध्ये ॥ ॐ ऐं ह्रीं श्रीं लं श्रं अनन्तकोटि जलचरकुलसेवितायै मां लां भीषणाम्बादेव्यै नमो ह्रां क्षां महालक्ष्मीअम्बादेव्यै अनन्तकोटि शाकिनी सेवितायै श्रं लं भीषणनाथाय श्रं लं संहार भैरवाय नमः ब्रह्मरन्ध्रे (परमशिवस्थाने)॥ॐ ऐं ह्रीं श्रीं मातृभैरवाधिपायै आर्यै पराम्बादेव्यै नमः अनेन व्यापकं चरेत् ॥

इति षष्ठ मातृकाभैरव न्यासः ॥

मानसोपचारैः सम्पूज्य ॥

## अथ ध्यानम् ॥

अमृतार्णव मध्योद्यन्मणिद्वीपे सुशोभिते ॥ कल्पवृक्ष-वनान्तस्थ नवमाणिक्य मण्डपे ॥ नवरत्नमयं श्रीमत्सिंहासनगतेम्बुजे ॥ त्रिकोणाम्थः समासीनं चन्द्रसूर्यसमन्वितम् ॥ अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् ॥ कोटिकन्दर्प लावण्यं सदाषोडशवार्षिकम् ॥ मन्दस्मितमुखाम्भोजं त्रिनेत्रंचन्द्रचूडकम् ॥ दिव्याम्बरस्रगालेपं दिव्याभरणभूषितम् ॥ एवं चित्ताम्बुजेध्यायेदर्द्धनारीश्वरं शिवम् ॥ पुंरूपं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत् ॥ अथवा निष्कलंध्यायेत्सच्चिदानन्द लक्षणम् ॥ सर्वतेजोमयंदेवि मचराचर विग्रहं ॥

---

अमृत के समुद्र में शाभायान मणि, द्वीप के मध्य में कल्पवृक्ष का वन है उसके बीच में नवीन मणियों का मण्डप बना है।

जो महानुभाव शक्ति पूजन करना चाहें तो शक्ति षोढान्यास कर लें शिवका नहीं करें।

## अथ शक्ति षोढान्यास प्रकारः।

तत्र प्रथम शुद्ध मातृका न्यासः॥

अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं नमो हृदि॥ एं ऐं ओं औं अं अः कं खं गं घं नमो दक्ष भुजे॥ ङं चं छं जं झं ञं टं ठं डं ढं नमो वाम भुजे॥ णं तं थं दं धं नं पं फं बं भं नमो दक्ष पादे॥ मं यं रं लं वं शं षं सं हं लं क्षं नमो वाम पादे॥ इति प्रथम शुद्ध मातृका न्यासः॥

अथ द्वितीय न्यासः॥

श्रीं अं श्रीं अं श्रीं अं नमो ललाटे इत्यादि सृष्टिन्यास के अनुसार उन्हीं स्थानों में होगा——

अथ तृतीय न्यासः॥

क्लीं श्रीं क्लीं श्रीं क्लीं श्रीं नमो ललाटे, पूर्वोक्त प्रकार से यह भी होगा। न्यास में तत्वमुद्रा सब जगह लगाना।

---

त्रिगुणात्मक जल के बीच में सुन्दर रत्नजटित कमलों के सिंहासन पर शिव पार्वती सूर्य चन्द्रमा करके सुशोभित- सुन्दर सुन्दर आभूषणों से युक्त तथा करोड़ों कामदेव से भी मनोहर सदा (सर्वदा) १६ वर्ष की अवस्था के अनुसार मन्द मन्द हंसते हुए तीन नेत्र और जटाओं में अर्द्धचन्द्रमा कर के युक्त हैं सुन्दर वस्त्र पुष्पमाला, लेप और आभूषणों से सुसज्जित हैं इस प्रकार की अर्द्ध नारीश्वर शिव की मूर्ति को अपने हृदय कमल में पुरुष रूप

अथ चतुर्थ न्यासः ॥

ह्रीं श्रीं ह्रीं श्रीं ह्रीं श्रीं नमः ललाटे पूर्वोक्त स्थानों पर सृष्टिन्यास की तरह होगा—.

अथ पञ्चम न्यासः ॥

ऐं ह्रीं ऐं जूं सः भूर्भुवः स्वः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥ भूर्भुवः स्वरोंजूंसः ह्रीं ऐं ह्रीं ह्रीं क्ष क्ष क्षं नमः ललाटे॥ सृष्टिन्यास के अनुसार तथा मुद्रा भी वही—

अथ षष्ठ न्यासः॥

केवल मूलमन्त्र से सृष्टिन्यास के अनुसार होगा—

अथ विलोम न्यासः ॥

मूलमन्त्र से संहारन्यास के अनुसार होगा—

---

वा स्त्रीरूप अथवा सच्चिदानन्द (सत्य चैतन्य) और आनन्द स्वरूप सम्पूर्ण तेजोमय चराचर के स्वामी का ध्यान करे। तथा सहस्रदल कमल (ब्रह्मरन्ध्र) में गुरु का पूजन, ध्यान, शिव रूप मान कर करे। सब देवता स्वरूप वर अभय धारण करने हुए सुन्दर चन्दन आदि से युक्त प्रसन्नमुख। इस प्रकार न्यास करने से महादेव कहते हैं कि हे पारवती! वह मेरा ही स्वरूप हो जाता है। निग्रह अनुग्रह की शक्ति साधक में हो जाती है जो साधक इस महा षोढान्यास को नित्य करता है वह मुझको पाता है।

इति ऊर्द्धआम्नाय तन्त्रे शिव पार्वती सम्वादे शिव महाषोढान्यास प्रकारः।

अथ तत्व न्यासः ॥

ऐं ह्रीं ऐं जूंसः भूर्भुवः स्वः त्र्यम्बकं यजामहे आत्मतत्त्वाय नमः पादादि नाभि पर्यन्तम् ॥ सुगन्धिं पुष्टिवर्द्धनम् उर्वारुकमिवबन्धनान् विद्यातत्त्वाय नमः नाभ्यादि हृदय पर्यन्तम् ॥ मृत्योर्मुक्षीय मामृतात् भूर्भुवः स्वरों जूंसः ह्रीं ऐं शिवतत्त्वाय नमः हृदयादि शिरः पर्यन्तम् ॥ ततो नवधा सप्तधा पञ्चधा वा मूलमुच्चरन् व्यस्य हस्ताभ्यां व्यापक न्यासं विधाय पूजामारभेत् ॥

इति आगरा नगरस्थ श्रीविद्या-धर्म-वर्द्धिनी पाठशालायाः कर्मकाण्ड यजुर्वेदाध्यापकेन "श्रीलक्ष्मीनारायण गोस्वामिना" संग्रहीत शिवार्चनस्मृतौ न्यासादि प्रथमखण्डः समाप्तः ॥

---

ततो न्यासान्कृत्वा स्वस्तिवाचनपूर्वकं स्वामिकार्तिक नंदी पार्वती गणेशादि देवान्प्रपूज्य पीठपूजां कुर्यात् ॥
आचम्य प्राणानायम्य स्वस्तिवाचनं पठेत् ॥

## अथ स्वस्ति वाचनम् ॥

हरिः ॐ आनो भद्राः क्रतवो यन्तुविश्वतो ऽदब्धासोऽअपरीतासऽउद्भिदः ॥ देवानो यथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥ १ ॥ देवानांभद्रा सुमतिऋर्जूयतान्देवानाᳬंᳬ रातिरभिनोनिवर्तताम् ॥ देवानाᳬंᳬसख्यमुपसे दिमावयन्देवानऽआयुः प्रतिरन्तुजीवसे ॥२॥ तान्पूर्वयानि विदाहूमहेवयम्भगम्मित्रमदितिन्दक्षमस्रिधम् ॥अर्य-

मणवरुणर्ठ० सोममश्विना सरस्वतीनः सुभगामयस्करत् ॥३॥तन्नोवातो मयो भुवातु भेषजन्तन्माता पृथिवीतत्पिता-द्यौः। तद्ग्रावाणः सोमसुतो मयो भुवस्तदश्विना शृणुतंधिष्ण्यायुवम् ॥ ४ ॥ तमीशानंजगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसेहूमहेवयम् ॥ पूषानो यथा वेदसामसद्वृधेरक्षितापायुरदब्धः स्वस्तये ॥५॥ स्वस्तिनऽइन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥ ६ ॥ पृषदश्वा मरुतः पृश्निमातरः शुभयावानोविदथेषु जग्मयः ॥ अग्निजिह्वा मनवः सूरचक्षसो विश्वेनोदेवाऽअवसागमन्निह ॥७॥ भद्रंकर्णेभिः शृणुयामदेवा भद्रम्पश्ये माक्षभिर्यजत्राः ॥ स्थिरैरंगैस्तुष्टुवार्ठ० सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥८॥ शतमिन्नुशरदोऽअन्तिदेवायत्रानश्चक्राजरसन्तनूनाम् ॥ पुत्रा सो यत्रपितरो भवन्तिमानो मद्ध्यारी रिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्ष मदितिर्माता सपिता: सपुत्रः। विश्वेदेवाऽअदितिः पञ्चजनाऽ अदितिर्जातमदितिर्जनित्वम् ॥१०॥ द्यौः शान्तिरन्तरिक्षर्ठ० शान्तिःपृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्वर्ठ०शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥ ११ ॥ विश्वानिदेव सवितर्दुरितानि परासुव ॥ यद्भद्रन्तन्नाऽआसुव ॥१२॥ विश्वानिदेव देवविश्वानि विश्वा-

निर्देव ॥ देवसवितः सवितर्देवदेवदेवसवितः सवितदु रि-
तानि दुरितानि सवितः सवितदु रितानि" दुरितानिपरा
परादुरितानि परा ॥ दुरितानितिदुः इति निपरासुवा
सुवापारा परा सुवा सुवेति सुवा ॥ यद्भद्रंभद्रं यद्भद्रम्
भद्रंतत्तद्भद्रं भद्रंतत् ॥ तन्नोनस्तन्नः ॥ नऽआसुवा सुवानः
नऽआसुव॥आसुवा सुवेति सुवा॥१३॥एतन्तेदेवसवितर्यज्ञं
प्राहुर्बृहस्पतये ब्रह्मणे ॥ तेनयज्ञ मवतेन यज्ञपतिन्तेन मामव
॥१४॥ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनो-
त्वरिष्टं यज्ञ्ँ समिमन्दधातु ॥ विश्वेदेवा सऽइहमादय-
न्तामों प्रतिष्ठ॥१५। एपवै प्रतिष्ठानाम यज्ञो यत्रैतेन यज्ञेन
यजन्ते सर्वमेव प्रतिष्ठितं भवति ॥ सिद्धिबुद्धि सहित
श्रीमन्महागणेशाय नमः ॥ ध्यानार्थे पूजनार्थे अक्षतान्
समर्पयामि नमः ॥ देशकालौ संकीर्त्य मम ( गोत्रामुक
यजमानस्य) शरीरे उत्पन्नोत्पत्स्य मानाखिल अरिष्टनिवृत्तये
श्रीमहामृत्युञ्जय प्रसादाद्दीर्घायुष्य सततमारोग्यताप्राप्तये
सहस्र संख्याकं महामृत्युञ्जयमन्त्रजपं करिष्ये ॥ तदङ्गतया
स्वामिकार्तिक नन्दी (पार्थिवनिर्माण) पार्वती महामृत्युञ्जय-
गणेशादिदेवानाम् यथा मिलितोपचारद्रव्यैः पूजनञ्चकरिष्ये॥
( ब्राह्मण द्वारा कारयिष्ये ) इति यजयानोक्तिः ॥

---

१ टिप्पणी लिङ्ग शालग्रामयोरावाहन विसर्जने नस्तः ॥
२ यजमान पक्षे, करिष्यामि इति ब्राह्मणोवदेत ॥

## गणेश पूजनम् ॥

हस्ते गन्धाक्षत पुष्पाण्यादाय ॥ ॐ गणानांत्वा गणपतिं हवामहे कविंकवीनामुपमश्रवस्तमम् ॥ ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पतआनः ॥ शृण्वन्नूतिभिः सीदसादनम्॥ ॐ गणपतये नमः ॥ गन्धादिभिः सम्पूज्य ॥

## अथ ध्यानम् ॥

एकदन्तं शूर्पकर्णं गजवक्त्रं चतुर्भुजम् ॥ पाशाङ्कुशधरं देवम्मोदकान्बिभ्रतङ्करैः ॥ रक्तपुष्पमयीम्मालाङ्कण्ठे हस्ते परांशुभाम् ॥ भक्तानांवरदम् सिद्धिबुद्धिभ्यां सेवितं सदा ॥ सिद्धिबुद्धि प्रदन्नृणान्धर्मार्थ काममोक्षदम् ॥ ब्रह्मरुद्र हरीन्द्राद्यैः संस्तुतम्परमर्षिभिः ॥ अनया पूजया सिद्धिबुद्धिसहितगणेशः प्रीणातु ॥

## स्वामिकार्तिक पूजनम् ॥

ॐ यदक्रन्दः प्रथमंजायमानऽउद्यन्समुद्रा दुतवापुरी-पात् ॥ श्येनस्यपक्षा हरिणस्यबाहूऽउपस्तुत्यं महिजातंतेऽअर्वन् ॥ ॐ षण्मुखाय नमः ॥ पाद्यादिभिः सम्पूज्य ॥

## अथ ध्यानम् ॥

अर्चिष्यन्तिविदार्यवक्त्र कुहराण्यासृक्कितोवासुके-रङ्गुल्या विषकर्बुरान्गणयतः संस्पृश्यदन्ताङ्कुरान ॥ एवंत्रीणि

च सप्त पंच षडिति प्रध्वस्तसंख्याक्रमा वाचः क्रौञ्चरिपोः शिशुत्वविकला श्रेयांसि पुण्यन्तु वः ॥ अनया पूजया षण्मुखः प्रीयताम् ॥

## नन्दी पूजनम् ॥

ॐ प्रैतुव्वाजी कनिक्रदन्नानदद्रासभः पत्वा ॥ भरन्नग्निम्पुरीष्यम्मापाद्यायुषः पुरा ॥ नन्दिने नमः ॥ पाद्यादिभिः सम्पूज्य ॥

### ध्यानम् ॥

कण्ठालङ्कार घण्टाघणघण रचिताध्मातरोदः कटाहः। कण्ठेकालाधिरोहो चितघनसुभगंभावुकस्निग्धपृष्ठः ॥१॥ साक्षाद्धर्मो वपुष्मान्धवल ककुदनिर्धूत कैलासकूटः॥ कूटस्थो वः ककुद्मान्निबिडतरतमः स्तोमतृष्यांवितृष्णयात् ॥२॥

## गौरी पूजनम्

ॐ गौरीर्मिमायसलिलानि तक्षत्येकपदी द्विपदी चतुष्पदी अष्टापदी नवपदी बभूवुषी सहस्राक्षरापरमेव्योमन् ॥ गौर्य्यैनमः ॥ पाद्यादिभिः सम्पूज्य ॥

### ध्यानम् ॥

विरञ्चिनारायण वन्दनीयोमानं विनेतुंगिरिशोऽपि यस्याः। कृपाकटाक्षेण निरीक्षणानिव्यपेक्षते सावतु वो भवानी ॥ अनया पूजया गौरी प्रीयताम् ॥

## * विशेषार्घ्य स्थापन विधिः ॥

स्वाग्रे दक्षे वा त्रिकोण षट्कोण वृत्तं चतुरस्रं कृत्वा शंखमुद्रया[१] स्तंभयेत् ॥ मध्ये । —ॐ जय ध्वनि मातः स्वाहेति घण्टां संपूज्य वादयेत् ॥ आगमार्थंतु देवानां गमनार्थं तु रक्षसाम् । घण्टारवं प्रकुर्वीत देवताप्रीति कारकम् ॥

मध्ये ह्रीं इतिबीजं विलिख्य सामान्यार्घोदकेनाभ्युक्ष्य ततः चतुरस्रकोणेषु ॐपूर्णगिरि पीठाय नमः पूर्वे । ॐउड्डीयान पीठाय नमः दक्षिणे ॥ ॐ कामरूप पीठाय नमःपश्चिमे । ॐ जालंधर पीठाय नमः उत्तरे ॥ त्रिकोणं

---

टिप्पणी—* अर्घ्यं पाद्याचमनीयमधुपर्काचमस्य च ।
पञ्चपात्राणिपुष्पादीन् स्थापयेत्ग्वीय दक्षिणे ॥
मंत्र महोदधौ २१ त० ७५ श्लोक ।

धर्मसारे ॥ कलशं शङ्ख घण्टे च पाद्यार्घ्याचमनीयकम् ।
संपूज्यप्रोक्षयेचात्मानं पूजासंभारमेवच ॥

पूजासागरे॥ सुवासितजलैः पूर्णं सव्येकुम्भं प्रपूजयेत् ।
कलशस्येतिमन्त्रेण तीर्थान्यावाहयेत्ततः ॥
वामेऽम्बुपात्रं छत्रमादर्शंचामरे ।
कृताञ्जलिर्वामदक्षे गुरूंगणपतिंनमेत् ॥

शंख मुद्रा लक्षणम् ॥ १ वामाङ्गुष्ठन्तुसंगृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्तानं तथा मुष्टिमङ्गुष्ठन्तु प्रसारयेत् ॥
वामाङ्गुल्यस्तथाश्लिष्टाः संयुताः सुप्रसारिता ।
दक्षिणाङ्गुष्ठकेलग्ना मुद्राशङ्खस्यभूतिदा ॥

मूल खंडत्रयेण संपूज्य ॥ ॐ ह्रीं आधार शक्तये नम इति मपूज्य, पट्कोणेषु षडङ्गानिसंपूज्य । तत्राधारे अर्घ्यपात्रं संस्थाप्य, नम इति [1]सामान्यार्घ्योदकेनाभ्युक्ष्य ॥ मं दश कलात्मने वह्निमंडलाय नमः ॥ ओं यं धूम्रार्चिषे नमः । ओं रं ऊष्मायै नमः ॥ ओं लं ज्वलिन्यै नमः । ओं वं ज्वालिन्यै नमः । ओं शं विस्फुलिंगिन्यै नमः । ओं षं सुश्रियै नमः । ओं सं स्वरूपायै नमः । ओं हं कपिलायै नमः ॥ ओं लं हव्य वाहायै नमः । ओं चं कव्य वाहायै नमः ॥ इति सम्पूज्य ॥ ओं फडिति पात्रं प्रक्षाल्य ॥ ओं महामृत्युञ्जय शिवार्घ्यपात्रं संस्थापयामि इति संस्थाप्य । ओं अं अर्कमंडलाय द्वादशकलात्मने अर्घ्य पात्राय नमः॥ ओं कं भं तपिन्यै नमः । ओं खं बं तापिन्यै नमः । ओं गं फं धूम्रायै नमः ॥ ओं घं पं मरीच्यै नमः ॥ ओं ङं नं ज्वालिन्यै नमः ॥ ओं चं धं रुच्यै नमः ॥ ओं छं दं सुषुम्णायै नमः ॥ ओं जं थं भोगदायै नमः । ओं झं तं विश्वायै नमः ॥ ओं ञं णं बोधिन्यै नमः । ओं टं ढं धारिण्यै नमः ॥ ओं ठं डं क्षमायै नमः । इति सम्पूज्य ॥ विलोम मातृकां पठन् अर्घ्यपात्रं पूरियामीति जलेन (तीर्थोदकेन) कलशं पूरयित्वा । तत्र श्वेतचन्दन पुष्पादि निक्षिप्य ॥ ओं सं षोडश कलात्मने सोममण्डलाय नमः ।

[1] सामान्यार्घ विधि पृष्ट २ में है ।

ओं अं अमृतायै नमः ॥ ओं आं मानदायै नमः । ओं इं पूषायै नमः ॥ ओं ईं तुष्ट्यै नमः । ओं उं पुष्ट्यै नमः ॥ ओं ऊं धृत्यै नमः । ओं ऋं धृत्यै नमः ॥ ओं ॠं शशिन्यै नमः । ओं लृं चंडिकायै नमः । ओं लॄं कान्त्यै नमः । ओं एं ज्योत्स्नायै नमः ॥ ओं ऐं श्रियै नमः । ओं ओं प्रीत्यै नमः ॥ ओं औं गदायै नमः । ओं अं पूर्णायै नमः । ओं अः पूर्णामृतायै नमः । इति संपूज्य ॥ कुशेन त्रिकोण वृत्त पट् कोणं लिखित्वा तन्मध्ये त्रिकोण रेखायां अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं इति विलिख्य त्रिकोण रेखायां मध्ये हं लं क्षं इति विलिख्य मूलखण्डत्रयेण त्रिकोणं संपूज्य ॥ षट्कोणेषु षडंगं च पूजयित्वा । गंगे च यमुनेचैव गोदावरि सरस्वति । नर्मदे सिन्धुकावेरि जलेस्मिन्संनिधिंकुरु॥ ओं ब्रह्माण्डोदरतीर्थानि करैःस्पृष्टेन ते रवे । तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ इति मंत्रेण अंकुशा१ मुद्रया सूर्यमंडलात्तीर्थान्यावाह्य वौषट् इति पुष्पं वषट् इति गालिनी२ मुद्रां प्रदर्श्य ॥ महामृत्युञ्जय रुद्राय नमः ॥ इति

१ ऋजुमध्या मध्यपर्वाक्रान्तातर्जन्यधोमुखी विज्ञेयांकुशमुद्रेयं कुंचिता मध्यपर्वतः ॥

टिप्पणी२ गालिनी मुद्रा यथा-कनिष्ठांगुष्ठकौ युक्तौ करयोरितरेतरम् । तर्जनी मध्यमा नामासहतौभुग्न वर्जिताः ॥

ध्यात्वा सम्पूज्य ॥ तत्तन्मंत्रेण पूर्वादिक्रमेण रत्नानि प्रपूजयेत् । ॐ ग्लूं गगन रत्नेभ्यो नमः ॥ ॐ स्लूं स्वर्ग रत्नेभ्यो नमः । ॐ म्लूं मर्त्य रत्नेभ्यो नमः । ॐ न्लूं नागरत्नेभ्यो नमः । ॐ प्लूं पाताल रत्नेभ्यो नमः । इति सम्पूज्य । आनन्द भैरव आनन्द भैरव्यौध्यायेत् ॥ सूर्य कोटि प्रतीकाशं चन्द्रकोटि सुशीतलम् ॥ अष्टादश भुजं देवं पञ्च वक्त्रंत्रिलोचनं ॥ अमृतार्णव मध्यस्थं ब्रह्मपद्मोपरि स्थितम् ॥ वृषारूढं नीलकण्ठं सर्वाभरणभूषितम् ॥ कपाल खट्वाङ्गधरं घंटाडमरुवादनम् ॥ पाशांकुशधरं देवं गदा मुसलधारिणम् ॥ खड्गखेटक पट्टीशमुद्गरं शूलदंडकम् ॥ विचित्र खेटकं मुंडवरदाभयपाणिकम् ॥ लोहितं देव देवे-शंभावयेत्साधकोत्तमः ॥ वं इति धेनु मुद्रयामृती कृत्य । तज्जलेन स्वात्मानं पूजा सामग्रीं च प्रोक्षयेत् । इति विशेषार्घ्य विधिः ॥

शैवागमोक्त महामृत्युञ्जय सावरणयन्त्र पूजन विधानम् ॥

वायुकोणादारभ्यईशानान्तम् गुरु चतुष्ट पूजनम् ।

ॐ गुं*गुरुभ्यो नमः । ॐ पं परमगुरुभ्यो नमः । ॐ पं परापर गुरुभ्यो नमः । ॐ पं पर-मेष्ठी गुरुभ्यो नमः । पुष्पाञ्जलिमादाय मूलान्ते

---

*गुरुस्तव—ॐ ब्रह्मस्थानसरोजमध्य विलसच्छीतांशु-पीठस्थितम् । स्फूर्यत्सूर्यरुचिं वराभयकरं कर्पूरकुन्दोज्वलम् ॥

अभीष्टसिद्धिंमेदेहि शरणागत वत्सल । भक्त्या समर्पये तुभ्यं गुरुपंक्ति प्रपूजनम् ॥ ॐ ह्रीं श्रां आधार शक्तये नमः । ॐ मं मंडूकाय नमः ॥ ॐ कां कालाग्नि रुद्राय नमः । ॐ कूं कूर्माय नमः । ॐ वं वराहाय नमः । ॐ धं धर्माय रक्तवर्णाय वृषभरूपधराय नमः । ॐ ज्ञां ज्ञानाय अनन्त वर्णाय नमः । ॐ वैं वैराग्याय शुभ्रवर्णाय नमः । ॐ ऐं ऐश्वर्याय कुन्देन्दु गौरवर्णाय नमः । ॐ अं अधर्माय शुभ्रवर्णाय नमः । ॐ अं अज्ञानाय तेजो रूपाय

---

श्वेतः सुगंधसनानुलेपनयुतं विद्युद्रुचाकान्तया । संश्लिष्टार्धतनु प्रसन्नवदनं वन्दे गुरुं सादरम्॥१॥मोहध्वान्त महावृतां प्रहवतां चक्षुर्विचोन्मीलयन् । यश्चक्रे रुचिराणितानिदयया ज्ञानांजनाम्बंजनैः ॥ व्यातंयन्महसा जगत्रयमिदं तत्त्व प्रबोधोदयम् ॥ तं वन्दे शिवरूपिणं निज गुरुं सर्वार्थ सिद्धि प्रदम् ॥२॥ मातंगी भुवनेश्वरी च बगलाधूमावती भैरवी । ताराछिन्नशिरोधरा भगवती श्यामा रमा सुन्दरी ॥ दातुं नः प्रभवन्ति वांछित फलं यस्य प्रसादं विना । तंवन्दे शिव रूपिणंनिज गुरुं सर्वार्थ सिद्धि प्रदम् ॥३॥ काशी द्वारवती प्रयाग मथुरायोध्या गयावन्तिका । माया (हरिद्वार) पुष्कर कांचिकोत्कल गिरी श्री शैलविन्ध्यादयः ॥ नैतेतारयितुं भवंवि कुशलाः यस्य प्रसादं विना । तं वन्दे शिवरूपिणं निज गुरुं सर्वार्थ सिद्धिप्रदम् ॥४॥ रेवा सिन्धु

नमः । ओं अं अनैराज्ञाय धूम्रवर्णाय नमः । ओं अं अनैश्वर्याय नीलजीमूत वर्णाय नमः । धर्म्मादयः पीठपादाः इतरेपीठ गात्राणि ॥ मध्ये ॥ ओं अं अनन्ताय नमः । ओं तं तत्वपद्माय नमः ॥ ओं आं आनन्दमय कंदाय नमः ओं सं संविन्नालाय नमः ॥ ओं विं विकारमय केसरेभ्यो नमः । ओं प्रं प्रकृत्यात्मक पत्रेभ्यो नमः । ओं पं पंचाशद्वर्ण कर्णिकाभ्यो नमः । ओं सं सत्वाय चन्द्रवर्णाय नमः । ओं रं रजसे रक्तवर्णाय नमः । ओं तं तमसे तमाल श्यामलाय नमः । ओं सूं सूर्य मंडलाय नमः । ओं अं अग्नि मंडलाय नमः । ओं चं चन्द्र मंडलाय नमः । ओं मां माया तत्वाय नमः ॥ ओं कं कला तत्वाय नमः । ओं विं विद्या तत्वाय नमः । ओं शिं शिव तत्वाय नमः । ओं आं आत्मने नमः॥ ओं अं अन्तरात्मने नमः ॥ ओं पं परमात्मनेनमः। ओं जीं जीवात्मने नमः । ओं वां वामायै नमः । ओं ज्यें ज्येष्ठायै नमः । ओं रौं रौद्रायै नमः । ओं कां काल्यै नमः । ओं कं कलविकरिण्यै नमः । ओं बं बल विकरिण्यै नमः ॥ ओं बं बल प्रमथिन्यै नमः॥ ओं सं सर्वभूत दमन्यै नमः । ओं मं मनोन्मन्यै नमः ॥ इति पीठं सपूज्य ।

---

सरस्वती त्रिपथगासूर्यात्मजा कौशिकी ॥ गंगा सागर संगमाद्रिवनमा लौहित्य शोणादयः ॥ नालं प्रोक्तफल प्रदान समर्थ यस्य प्रसादं विना ॥ तं वन्दे शिवरूपिणं निज

आसन मन्त्रः।

मूलम् १ ॐ नमो भगवते सकलगुणात्म शक्तियुक्ताय अनन्ताय योगपीठात्मने नमः॥

धेनुमुद्रां प्रदर्श्य।

ततः मूलमुच्चार्य महामृत्युञ्जय रुद्रं ध्यात्वा कुंडलिनी मुत्थाप्य तया सहशिवेन संयोज्य (यं) वायुबीजेन वाम

---

गुरुं सर्वार्थ सिद्धि प्रदम् ॥५॥ सत्कीर्तिर्विमलायशः सुकविता पाण्डित्यमारोग्यता ॥ वादे वाक् पटुता कुले चतुरता गांभीर्यमच्चोमिता ॥ प्रागल्भ्यं प्रभुता गुणे निपुणता यस्य प्रसादाद्भवेत् ॥ तं वन्दे शिव रूपिणं निज गुरुं सर्वार्थ सिद्धि प्रदम् ॥६॥ लोकेशो हरिरंबिका स्मर हरो माता पिता भ्यागता ॥ आचार्यः कुल पूजितो पति वरो वृद्धस्तथाभिक्षुकः ॥ नैते यस्यतुलां व्रजन्तिकलया कारुण्य वाराँनिधेः ॥ तं वन्दे शिवरूपिणं निज गुरुं सर्वार्थ सिद्धि प्रदम् ॥७॥ ध्यानंत्र्चत पूजनं गुरु तपोदानाग्नि होत्रादयः॥ पाठोहोम निषेवनं पितृमखाहयभ्यागतार्चा बलिम् ॥ एते व्यर्थफला भवन्ति नियतं यस्य प्रसादं विना ॥ तं वन्दे शिवरूपिणं निज गुरुं सर्वार्थ सिद्धि प्रदम् ॥८॥

---

टिप्पणी—१ ॐ ह्रीं ॐ जूंसः भूर्भुवःस्वः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्। भूर्भुवःस्वरों जूं सः ह्रीं ॐ "मूल" स्थानेमंत्रोऽयम् सर्वत्रयोजनीयः। केवल रुद्रपूजने—आसन मंत्र-ॐ नमो भगवते रुद्राय नमः।

नासापुटेन सुषुम्णामार्गेण वा देवं कुसुमाञ्जलावानीय यंत्र मध्ये (पार्थिवोपरि) समर्प्य । इति ध्यात्वा प्रार्थयेत् ॥

(मू०) देवेश ! भक्त सुलभ परिवार समन्वित ।
यावत्त्वां पूजयिष्यामि तावद्देव इहावह ।
आवाहनाद्युपचारैः संपूजयेत् तद्यथा ॥

*आवाहनम् ॥

(मू०) तस्मिन्पीठे गुरुंनित्यमनन्तश्शक्तिभिर्युतम्
उमारमण विरवेशं रहितं कलुषैस्त्रिभिः ॥
गुणार्णवंप्रपंचेषु सर्वज्ञं च सदाशिवम्
आवाहये महादेवं श्वेतपर्वतमस्तकात् ॥
सूर्यमंडल तो वापि हृदयाम्बुज गह्वरात् ॥
अनेनावाहन मुद्रयावाह्य ।
आवाहन मुद्रा लक्षणम् ॥

---

पूर्वाशाभिमुखीकृताञ्जलि पुटः श्लोकाष्टकं यः पठेत् ॥
चौरश्चर्यविधिं विनापि लभते मंत्रस्यसिद्धिं पराम् ॥ नो
विघ्नैः परिभूयते प्रतिदिनं प्राप्नोति पूजा फलम् ॥
देहान्ते परमंपदं हि विशते यद्योगिनां दुर्लभम् ॥ ६ ॥
वामकेश्वर तन्त्रे पार्वतीश्वर संवादे गुरुस्तवराज सम्पूर्णः ।

---

टिप्पणी * शालग्रामेनार्मदे च नित्यंसन्निहितः शिवः (हरिः)। तस्मादावाहन विसर्जनेनस्तः। पार्थिवेष्वावाहन विसर्जने कार्ये सदा बुधैः ॥ तत्रैव वाचस्पतौ ॥ कुर्यादावाहनं मूर्तौमृण्मय्यां सर्वदैवहि। प्रतिमायांजले व ह्यानावाहन विसर्जने ॥

सम्यक् संपूजितैः पुष्पैः कराभ्यां कल्पिताञ्जलिः ।
आवाहनी समाख्याता मुद्रादेशिक सत्तमैः ॥

स्थापनम् ।

(मू०) तवेयं महिमामूर्तिस्तस्यां त्वं सर्वगः प्रभो ॥
भक्तिस्नेह समाकृष्ट दीपवत्स्थापयाम्यहम् ॥२॥

स्थापन मुद्रा लक्षणम्

अधोमुखी कृतासैव स्थापनीति निगद्यते ॥
अनेन स्थापन्या मुद्रया संस्थाप्य ॥

आसनम् ॥

(मू०) ॐ सर्वान्तर्यामिनेदेव सर्वबीजमयं शुभम् ।
स्वात्मस्थायपरं शुद्धमासनं कल्पयाम्यहम् ॥३॥

आसनं गृहाण नमः ।

अस्मिन्वरासने देव सुखासीनोऽक्षरात्मक ।
प्रतिष्ठितो भवेश त्वं प्रसीदपरमेश्वर ! ॥

उपविष्टोभव नमः सन्निधानम् ॥

(मू०) अनन्यातव देवेश मूर्तिशक्तिरियं प्रभो ।
सान्निध्यं कुरु तस्यां त्वं भक्तानुग्रहतत्पर ॥४॥

इति संनिधाय ॥ सन्निधान मुद्रा लक्षणम्

आश्लिष्टमुष्टियुगलप्रोन्नतांगुष्ठयुग्मका ।
सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः ॥

सन्निरोधनम् ॥

(मू०) आज्ञया तव देवेश कृपाम्भोधे गुणाम्बुधे ।

आत्मानन्दैकतृप्तं त्वां निरुणध्मि पितर्गुरो ॥५॥

सन्निरोधन मुद्रा लक्षणम् ॥

अंगुष्ठगर्भिणी सैव सन्निरोधे समीरिता ॥

सन्मुखीकरणम् ॥*

(मू०) अज्ञानाद्दुर्मनस्त्वाद्वा वैकल्पात्साधनस्य च ।
यदपूर्णं भवेत्कृत्यं तदप्यभिमुखो भव ॥ ६ ॥

संमुखी मुद्रा ॥

हृदि अञ्जली बंधनं प्रार्थनी मुद्रा ॥

सकलीकरणम् ॥

(मू०) दृशापीयूषवर्षिण्या पूरयन् यज्ञविष्टरम् ॥
मूर्तौ वा यज्ञसम्पूर्तः स्थितो भव महेश्वर ॥७॥

यहाँ षडङ्गन्यास करना इसे सकलीकरण कहते हैं। तथा प्राण प्रतिष्ठा–पृष्ठ में है

सकलीकरण मुद्रा ॥

देवांगेषु षडङ्गानां न्यासः स्यात्सकली कृतिः

अथवान्या सकलीकरण मुद्रा ॥

हृदयादि शरीरान्ते कनिष्ठाद्यंगुलीषु च ।
हृदादि मन्त्र विन्यासः सकलीकरणं मतम् ॥

अवगुण्ठनम् ॥

(मू०) अव्यक्तवाङ्मनश्चक्षुः श्रोत्रअज्वलितद्युते ।
स्वतेजः पुञ्जकेनाशु वेष्टितोभव सर्वतः ॥

अवगुण्ठन मुद्रा ॥

सव्यहस्त कृतामुष्टिः दीर्घाधोमुखतर्जनी ।
अवगुंठनमुद्रेयमभितो भ्रामिताभवेत् ॥

इत्यवगुंठ्य ॥ छोटिकयादिग्बंधनं कुर्यात् ॥

अमृतीकरणम् ॥

अमृतीकरणं कुर्यात्तयादेशिक सत्तमः ॥

धेनुमुद्रा अमृतीमुद्रा

[illegible] मिका पुनः ॥
[illegible] ॥

ततो धेनुमुद्रया अमृतीकृत्य ॥ परमीकरण मुद्रया परमीकृत्य ॥ महामुद्रांविरचयन् ॥

महामुद्रालक्षणम्

अन्योन्य ग्रथितांगुष्ठौ प्रसारित करांगुलिः ।
महामुद्रे यमुदिता, परमीकरणाम्बुधैः ॥

स्वागतमाचरेत् ॥

(मू०) यस्यदर्शन मिच्छन्ति देवाः स्वाभीष्टसिद्धये ॥
तस्मैते परमेशाय स्वागतं स्वागतं च मे ॥११॥
वचाकुर्यादिति प्रोक्तं मन्त्रशास्त्र विशारदैः ॥

सुस्वागतम् । कुशलम् ॥

(मू०) कृतार्थोऽनुगृहीतोऽस्मि सकलं जीवितं मम ॥
आगतो देव देवेश सुस्वागतमिदं पुनः ॥१२॥

श्यामाकविष्क्रान्ता कमलदूर्वायुतं ।

(मू०) यद्भक्तिलेश संपार्कात्परमानन्दविग्रहम् ।
तस्मै ते चरणाब्जाय पाद्यं शुद्धाय कल्पये ॥१३॥

इति पाद्यम् ॥

लवंगजाति कंकोलम् प्रक्षिप्याचमनीयके ।

(मू०) वेदानामपि वेद्याय देवानां देवतात्मने ॥
आचामं कल्पयामीश शुद्धानां शुद्धिहेतवे स्वधा ॥१४॥

इत्याचमनम्, अर्घ्यवस्तूनि ॥

दूर्वा तिल दर्भाग्र सर्षपान् यव पुष्पाक्षतान् गन्धं ।

(मू०) तापत्रयहरं दिव्यं परमानन्दलक्षणम् ।
तापत्रयविनिर्मुक्तं तवार्घं कल्पयाम्यहम् स्वाहा ॥१५॥

इत्यर्घम् शिरसि, मधुपर्कवस्तूनि दधि मधु घृत ॥

(मू०) सर्वकालुष्यहीनाय परिपूर्णसुखात्मने ।
मधुपर्कमिदं देव ! कल्पयामि प्रसीद मे ॥१६॥

इति मधुपर्कम् ॥

(मू०) उच्छिष्टोप्यशुचिर्वापि यस्यस्मरणमात्रतः ।
शुद्धिमाप्नोति तस्मै ते पुनराचमनीयकम् ॥१७॥

पुनराचमनीयम् ॥

स्नान वस्त्रोपवीतान्ते नैवेद्यान्तेपि तत्स्मृतम् ।

सुगन्धित इत्र तैलं ॥

[मू०] ॐ स्नेहं गृहाण स्नेहेन लोकनाथ ! महाशय ! ।
सर्वलोकेषुशुद्धात्मन ! ददामि स्नेहमुत्तमम् ॥१८॥

उद्वर्तनम् ॥

(मू०) हरिद्राद्यैस्तमुद्वर्त्य स्नापयेदुभयं पठन् ॥
नाना सुगंधि द्रव्यं च चन्दनं रजनीयुतम् ॥१९॥
उद्वर्तनं मयादत्तं स्नानार्थंप्रतिगृह्यताम् ॥
देवे अंगुष्ठघर्षणेदोपः ॥ तन्त्रान्तरे
नांगुष्ठैर्मर्दयेद्देवंनाथः पुष्पैसमर्चयेत् ।
कुशाग्रैर्नक्षिपेत्तोयं वज्रपातसमं भवेत् ॥२०॥

पंचामृत स्नानम् ॥

घृतक्षीरं तथा नीरं शर्करामधुसंयुतम् ।
पञ्चामृतमितिख्यातं प्रत्येकं तु पलं पलम् ॥

दुग्ध स्नानम् ॥

[मू०] कामधेनु समुद्भूतं सर्वेषां जीवनं परम् ॥
पावनं यज्ञहेतुश्च पयःस्नानार्थमर्पितम् ॥२१॥
पुनः शुद्धोकदेन संस्नाप्य ॥

दधि स्नानं ॥

[मू०] पयसस्तु समुत्पन्नं मधुरालमं शशि प्रभम् ।
दध्यानीतं मयादेव स्नानार्थं प्रतिगृह्यताम् ॥२२॥
पुनः शुद्धोदकेन संस्नाप्य ॥

घृत स्नानम् ॥

[मू०] नवनीत समुत्पन्नं सर्वसंतोषकारकम् ।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥२३॥

पुनः शुद्धोदकेन संस्नाप्य ॥

मधु स्नानम् ॥

[मू०] तरुपुष्प समुद्भूतं सुस्वादु मधुरं मधु ।
तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥२४॥

पुनः शुद्धोदकेन संस्नाप्य ॥

शर्करास्नानम् ॥

[मू०] इक्षुसार समुद्भूता शर्करा पुष्टिकारिका ।
मलापहारिकादिव्या स्नानार्थं प्रतिगृह्यताम् ॥२५॥

पुनः शुद्धोदकेन संस्नाप्य
एकीकृत्य पंचामृतेन स्नानम् ॥

[मू०] पयोदधि घृतं चैव मधु च शर्करायुतम् ।
पंचामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम् ॥२६॥

चन्दन [ गंध ] स्नानम् ॥

[मू०] मलयाचल संभूतं चन्दनागरु सम्भवम् ॥
चन्दनं देवदेवेश स्नानार्थं प्रतिगृह्यताम् ॥२७॥

पुनः शुद्धोदकेन संस्नाप्य ॥

सांग स्नानम् ॥

[मू०] परमानन्द बोधाब्धे निमग्न निजमूर्तये ।
सांगोपांगमिदं स्नानम् कल्पयाम्यहमीश ते ॥२८॥

## शतरुद्री

हरिः ॐ ॥ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः॥ बाहुभ्यामुततेनमः॥ १॥ यातेरुद्रशिवातनूरघोराऽपापकाशिनी॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि॥२॥ यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे॥ शिवाङ्गिरित्रताङ्कुरुमाहिर्ठ०सीःपुरुषञ्जगत् ॥३॥ शिवेनव्वचसात्वागिरिशाच्छावदामसि॥ यथानःसर्व्वमिज्जगदयक्ष्मर्ठ०सुमनाऽअसत् ॥ ४॥ अद्ध्यवोचदधिवक्ताप्प्रथमोदैव्योभिषक् ॥ अहींश्चसर्वाञ्जम्भयन्त्सर्व्वाश्चयातुधान्न्योधराचीःपरासुव ॥ ५ ॥ असौयस्ताम्म्रोऽअरुणऽउतबब्भ्रुःसुमङ्गलः॥येचैनर्ठ०रुद्राऽअभितोदिक्षुश्रिताःसहस्रशोवैषार्ठ०हेडऽईमहे ॥ ६ ॥ असौयोवसर्प्पतिनीलग्ग्रीवोविलोहितः ॥ उतैनङ्गो-

---

*** अभिषेकम् ***

ततः सहस्रशंखेनशतंवाशक्तितोपिवा ।
गन्धयुक्तोदकैरीशमभिषिचेन्मनुम्मरन् ॥

* टि० महाभिषेकं सर्वत्रशंखेनैवप्रकल्पयेत् । शिवसूर्यार्चनंविना ॥

### शतरुद्री क्रमः

नमस्ते रुद्रसूक्तंच पुनष्षोडशमेवच । एषतेद्विनंसहते द्विनंवविश्रयमेवच ॥ मीढुष्टमष्टचत्वारिंवयर्ठ०चाष्टमंयजेत् ॥

पाऽअदश्रन्नदश्रन्नुदहार्य्यःसदृष्टोमृडयातिनः ॥७॥ नमोस्तु-
नीलग्रीवायसहस्राक्षायमीढुषे ॥ अथोयेऽअस्यसत्वानोहन्ते-
भ्योकरन्नमः ॥८॥ प्रमुञ्चधन्वनस्त्वमुभयोरार्त्न्योर्ज्ज्याम् ॥
याश्चतेहस्तऽइषवःपराताभगवोव्वप ॥ ९ ॥ विज्ज्यन्धनुःक-
पर्दिनोविशल्योबाणवाँ२उत ॥ अनेशन्नस्ययाऽ इषवऽआ-
भुरस्यनिषङ्गधिः ॥ १० ॥ यातेहेतिर्म्मीढुष्टमहस्तेबभूवतेध-
नुः ॥ तयास्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ ११ ॥
परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥ अथोयऽइषुधिस्त-
वारेऽअस्मन्निधेहितम् ॥ १२ ॥ अवतत्यधनुष्ट्वठं॰ सहस्राक्ष-
शतेषुधे ॥ निशीर्य्यशल्यानाम्मुखाशिवोनःसुमनाभव ॥१३॥
नमस्तऽआयुधायानाततायधृष्णवे ॥ उभाभ्यामुततेनमोबाहु
भ्यान्तवधन्वने ॥ १४ ॥ मानोमहान्तमुतमानोऽअर्भकं-
म्मानऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोव्वधीःपितरम्मोतमात
रम्मानःप्रियास्तन्वोरुद्ररीरिषः ॥ १५ ॥ मानस्तोकेतनये-
मानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रु
द्रभामिनोव्वधीर्हविष्मन्तःसदमित्त्वाहवामहे ॥ १६ ॥ नमो
हिरण्यबाहवेसेनान्येदिशाञ्चपतयेनमोनमोव्वृक्षेभ्योहरिकेशे-
भ्यःपशूनाम्पतयेनमोनमःशष्पिञ्जरायत्त्विषीमतेपथीनाम्पत-
येनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमोनमोबभ्लुशा
य ॥ १७ ॥ नमोबभ्लुशाय । व्याधिनेन्नानाम्पतयेनमोनमो
भवस्यहेत्यैजगताम्पतयेनमोनमोरुद्रायाततायिनेक्षेत्राणाम्प-

तयेनमोनमःसूतायाहन्त्यैँव्वनानाम्पतयेनमोनमोरोहिताय॥१८
नमोरोहिताय । स्त्थपतयेव्वृक्षाणाम्पतयेनमोनमोभुवन्तयेव्वा-
रिवस्कृतायौषधीनाम्पतयेनमोनमोमन्त्रिणेव्वाणिजायकक्षाणा
म्पतयेनमोनमऽउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्पतयेनमोनमः
कृत्स्नायतया ॥ १६ ॥ नमःकृत्स्नायतया । धावतेसत्त्वनाम्प-
तयेनमोनमः सहमानायनिव्व्याधिनऽआव्व्याधिनीनाम्पतये
नमोनमोनिषङ्गिणेककुभायस्तेनानाम्पतयेनमोनमोनिचेरवेपरि
चरायारण्यानाम्पतये नमोनमोव्वञ्चते ॥ २० ॥ नमोव्वञ्चते ।
परिवञ्चतेस्तायूनाम्पतयेनमोनमोनिषङ्गिणऽइषुधिमतेतस्कराणा
म्पतयेनमोनमःसृकायिभ्योजिघा ँ सद्भ्योमुष्णताम्पतये
नमोनमोसिमद्भ्योनक्तञ्चरद्भ्योव्विकृन्तानाम्पतयेनमः ॥२१॥
नमऽउष्णीषिणे । गिरिचरायकुलुञ्चानाम्पतये नमोनमऽइषुम
द्भ्योधन्वायिभ्यश्चवोनमोनमऽआतन्वानेभ्यःप्रतिदधा
नेभ्यश्चवोनमोनमऽआयच्छद्भ्योस्यद्भ्यश्चवोनमोनमो
व्विसृजद्भ्यः ॥ २२ ॥ नमोविसृजद्भ्यो ॥ विद्ध्यद्भ्य
श्चवोनमोनमः स्वपद्भ्यो ॥ जाग्रद्भ्यश्चवोनमोनमःशयाने-
भ्यऽआसीनेभ्यश्चवोनमोनमस्तिष्ठद्भ्योधावद्भ्यश्चवो
नमोनमःसभाभ्यः ॥ २३ ॥ नमःसभाभ्यः । सभापतिभ्य
श्चवोनमोनमोश्वेभ्योश्वपतिभ्यश्चवोनमोनमऽआव्या
धिनीभ्योव्विविद्ध्यन्तीभ्यश्चवोनमोनमऽउगणाभ्यस्तृ ँ
हतीभ्यश्चवोनमोनमोगणेभ्यः ॥ २४ ॥ नमोगणेभ्यो ।

गणपतिभ्यश्श्चवोनमोनमोव्व्रातेभ्योव्व्रातपतिभ्यश्श्चवो-
नमोनमोगृत्सेभ्योगृत्सपतिभ्यश्श्चवोनमोनमोव्विरूपेभ्यो-
व्विश्वरूपेभ्यश्श्चवोनमोनमः ॥ २५ ॥ नमःसेनाभ्यः
सेनानिभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यश्श्चवोनमोन-
मःक्षतृभ्यःसंग्रहीतृभ्यश्चवोनमोनमो महद्भ्योऽअर्भकेभ्य
श्श्चवोनमः ॥ २६ ॥ नमस्तक्षभ्यो । रथकारेभ्यश्श्चवोन-
मोनमः कुलालेभ्यः कर्मारेभ्यश्चवोनमोनमोनिषादेभ्यः-
पुञ्जिष्ठेभ्यश्चवोनमोनमःश्वनिभ्योमृगयुभ्यश्चवोनमोनमः
श्वभ्यः ॥ २७ ॥ नमःश्वभ्यः । श्वपतिभ्यश्श्चवोनमोनमो-
भवायचरुद्रायचनमःशर्व्वायचपशुपतयेचनमोनीलग्रीवायच
शितिकण्ठायचनमःकपर्दिने ॥ २८ ॥ नमः कपर्दिनेचव्युप्तके
शायच नमः सहस्राक्षायचशतधन्वनेचनमोगिरिशयायचशिपि-
विष्टायचनमोमीढुष्टमायचेषुमतेचनमोह्रस्वाय ॥ २९ ॥
नमोह्रस्वाय । चव्वामनायचनमोबृहतेचव्वर्षीयसेचनमोव्वृद्धा
यचसवृधेचनमोऽग्र्यायचप्रथमायचनमऽआशवे ॥ ३० ॥
नमऽआशवे । चाजिरायचनमःशीघ्र्यायचशीभ्यायचनमः ।
ऊर्म्यायचावस्वन्न्यायचनमोनादेयायचद्वीप्यायच ॥ ३१ ॥
नमोज्येष्ठाय । चकनिष्ठायचनमःपूर्व्वजायचापरजायच
नमोमद्ध्यमायचापगल्भायचनमोजघन्यायचबुध्न्यायचनमः
सोभ्याय ॥ ३२ ॥ नमःसोभ्याय । चप्रतिसर्य्यायच नमोया
म्यायचक्षेम्यायचनमःश्लोक्यायचावसान्यायचनमऽउर्व्वर्य्या

यचवल्न्याय चनमोवन्न्याय ॥३३॥ नमोवन्न्याय। चकक्ष्याय चनमः श्रवाय चप्रतिश्रवाय चनमऽआशुषेणाय चाशुरथाय चनमः शूराय चावभेदिने चनमोबिल्मिने ॥ ३४ ॥ नमोबिल्मिने। चकवचिने चनमोवर्म्मिणे चवरूथिने चनमः श्रुताय चश्रुतसेनाय चनमोदुन्दुभ्याय चाहनन्याय चनमोधृष्णवे ॥ ३५ ॥ नमोधृष्णवे। चप्रमृशाय चनमोनिषङ्गिणे चेषुधिमते चनमस्तीक्ष्णेषवे चायुधिने चनमः स्वायुधाय चसुधन्वने च॥३६॥ नमःस्त्रुत्याय। चपथ्याय चनमः काट्याय चनीप्याय चनमः कुल्याय चसरस्याय चनमोनादेयाय चवैशन्ताय चनमः कूप्याय ॥ ३७ ॥ नमः कूप्याय। चावट्याय चनमोवीध्र्याय चातप्याय चनमोमेघ्याय चविद्युत्याय चनमोवर्ष्याय चनमोवात्याय ॥ ३८ ॥ नमोवात्याय। चरेष्म्याय च नमोवास्तव्याय चवास्तुपाय चनमः सोमाय चरुद्राय चनमस्ताम्राय चारुणाय चनमः शंगवे ॥३९॥ नम शंगवे। च पशुपतये चनमऽउग्राय चभीमाय चनमोग्रेवधाय चदूरेवधाय चनमो हन्त्रे चहनीयसे चनमोवृक्षेभ्योहरिकेशेभ्योनमस्ताराय ॥४०॥ नमः शम्भवाय। चमयोभवाय चनमः शङ्कराय चमयस्कराय चनमः शिवाय चशिवतराय च ॥४१॥ नमः पार्य्याय। चावार्य्याय चनमः प्रतरणाय चोत्तरणाय चनमस्तीर्थ्याय चकूल्याय चनमः शष्प्याय चफेन्याय चनमः सिकत्याय ॥ ४२ ॥ नमः सिकत्याय। चप्रवाह्याय च नमः किंशिलाय चक्षयणाय चनमः कपर्दिने चपुलस्तये चनम

हरिण्यायचप्रपथ्यायचनमोग्व्रज्ज्याय ॥ ४३ ॥ नमोव्व्र-
ज्ज्याय। चगोष्ठ्यायचनमस्तल्प्यायचगेह्यायचनमोहृदय्याय
चनिवेष्प्यायचनमः काट्यायचगह्वरेष्ठायचनम शुष्क्याय॥४४॥
नमःशुष्क्याय। चहरित्यायचनमः पा॰ँ सव्व्यायचरजस्यायच
नमोलोप्प्यायचोलप्प्यायचनमऽ ऊर्व्व्यायचसूर्व्व्यायचनमः
पर्णाय ॥ ४५ ॥ नमःपर्णायचपर्णशदायचनमऽउद्गुरमा
णायचाभिघ्नतेचनमऽआखिदतेचप्रखिदतेचनमऽइषुकृद्भ्यो
धनुष्कृद्भ्यश्चवो नमोनमोवःकिरिकेभ्योदेवानाँ हृदयेभ्यो
नमोविचिन्वत्केभ्योनमोविक्षिणत्केभ्योनमऽ आनिर्हतेभ्यः ॥ ४६ ॥ द्रापेऽअन्धसस्पतेदरिद्रनीललोहितः॥ आसा
म्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनःकिञ्चनाममत् ॥४७॥
इमारुद्राय। तवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथा
शमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम्॥४८
यातेरुद्रशिवातनूःशिवाविश्वाहाभेषजी ॥ शिवारुतस्यभेषजी
तयानोमृडजीवसे ॥४९॥ परिनोरुद्रस्यहेतिर्व्वृणक्तुपरित्वेष
स्यदुर्म्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तो
कायतनयायमृड ॥५०॥ मीढुष्टमशिवतमशिवोनःसुमनाभव
परमेवृक्षऽआयुधन्निधायकृत्तिव्वसानऽ आचरपिनाकम्बिभ्रदा
गहि ॥ ५१ ॥ विकिरिद्र विलोहित ः नमस्तेऽअस्तुभगवः ॥
यास्तेसहस्रहेतयोन्यमस्मन्निवपन्तुताः ॥ ५२॥ सहस्राणि
सहस्रशोबाह्वोस्तवहेतयः ॥ तासामीशानोभगवःपराचीना

मुखाकृधि ॥ ५३ ॥ असङ्ख्याताः सहस्राणि । येरुद्राऽअधिभू
म्याम् ॥ तेषाँ सहस्रयोजनेवधन्वानितन्नमसि ॥५४॥
अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधि ॥ तेषाँ सहस्रयोजनेव
धन्वानितन्नमसि ॥५५॥ नीलग्रीवाःशितिकण्ठादिवँ रुद्
द्राऽउपश्रिताः ॥ तेषाँ सहस्रयोजनेवधन्वानितन्नमसि ॥५६॥
नीलग्रीवाःशितिकण्ठाःशर्वाअधःक्षमाचराः ॥ तेषाँ सहस्रयोज
नेवधन्वानितन्नमसि ॥ ५७ ॥ येवृक्षेषु । शष्पिञ्जरानील
ग्रीवाविलोहिताः ॥ तेषाँ सहस्रयोजनेवधन्वानितन्नमसि॥५८॥
येभूतानामधिपतयोविशिखासःकपर्दिनः ॥ तेषाँ सहस्रयोज
नेवधन्वानितन्नमसि ॥ ५९ ॥ येपथाम्पथिरक्षयऽऐलबृदाऽ
आयुर्युधः ॥ तेषाँ सहस्रयोजनेवधन्वानितन्नमसि ॥ ६० ॥
येतीर्थानि । प्रचरन्तिसृकाहस्तानिषङ्गिणः ॥ तेषाँ
सहस्रयोजनेवधन्वानितन्नमसि ॥ ६१ ॥ येन्नेषु । विवि
ध्यन्तिपात्रेषुपिबतोजनान् ॥ तेषाँ सहस्रयोजनेवधन्वानित
न्नमसि ॥ ६२ ॥ यऽएतावन्तश्चभूयाँ सश्चदिशोरुद्रा
वितस्थिरे ॥ तेषाँ सहस्रयोजनेवधन्वानितन्नमसि ॥६३॥
नमोस्तु । रुद्रेभ्योयेदिवियेषांवर्षमिषवः ॥ तेभ्योदशप्रा
चीर्दशदक्षिणादशप्रतीचीर्दशोदीचीर्दशोर्ध्वाः ॥ तेभ्यो
नमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टि
तमेषाञ्जम्भेदध्मः ॥ ६४ ॥ नमोस्तु । रुद्रेभ्योयेन्तरिक्षेयेषां
वातऽइषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणा दशप्रतीचीर्दशो

दीचोर्द्दशोद्ध्वाः तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्वि ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥६५॥ नमोस्तु । रुद्रेभ्यो येपृथिव्यांयेषामन्नमिषवः ॥ तेभ्योदशप्राचीर्द्दशदक्षिणाद शप्रतीचीर्द्दशोदीचोर्द्दशोद्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनो मृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥६६॥ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः॥६७॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्वाशन्तम यागिरिशन्ताभिचाकशीहि ॥ ६८ ॥ यामिषुङ्गिरिशन्तहस्ते बिभर्ष्यस्तवे ॥ शिवांगिरित्रताङ्कुरुमाहिꣳसीःपुरुषञ्जगत्॥६९॥ शिवेनवचसात्वागिरिशाच्छावदामसि ॥ यथानःसर्वमिज्ज गदयक्ष्मꣳसुमनाऽअसत् ॥७०॥ अध्यवोचदधिवक्ताप्रथमो दैव्योभिषक् ॥ अहींश्चसर्वाञ्जम्भयन्त्सर्वाश्चयातुधा न्न्योधराचीःपरासुव ॥ ७१ ॥ असौयस्ताम्रोऽअरुणऽउतब भ्रुः सुमंगलः ॥ येचैनꣳरुद्राऽअभितोदिक्षुश्रिताः सहस्रशो वैषाँ हेडऽईमहे ॥ ७२ ॥ असौयोवसर्प्पतिनीलग्रीवोविलो हितः ॥ उतैनंगोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यःसदृष्टोमृडया तिनः ॥ ७३ ॥ नमोस्तुनीलग्रीवायसहस्राक्षायमीढुषे ॥ अथो येऽअस्यसत्वानोहन्तेभ्योकरन्नमः ॥ ७४ ॥ प्रमुञ्चधन्वन स्त्वमुभयोरार्त्न्योर्ज्ज्याम्॥ याश्चतेहस्तऽइषवःपराताभगवोवप ॥ ७५ ॥ विज्ज्यन्धनुःकपर्दिनोविशल्योबाणवाँ२उत ॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषंगधिः ॥ ७६ ॥ याते हेति

र्म्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्मान्विश्वतस्त्वमपक्ष्मया
परिभुज ॥ ७७ ॥ परितेधन्वनोहेतिरस्मान्वृणक्तुविश्वतः ॥
अथोयइषुधिस्तवारे अस्मन्निधेहितम् ॥ ७८ ॥ अवतत्यधनु
ष्ट्वँ सहस्राक्षशतेषुधे ॥ निशीर्य्यशल्यानाम्मुखाशिवोनःसुम
नाभव ॥ ७९ ॥ नमस्तऽआयुधायानातताय धृष्णवे ॥ उभा
भ्यामुततेनमोबाहुभ्यान्तवधन्वने ॥ ८० ॥ मानोमहान्त
मुतमानोऽअर्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोव
धीःपितरम्मोतमातरम्मानः प्रियास्तन्वोरुद्ररीरिषः ॥ ८१ ॥
मानस्तोके तनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥
मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्मन्तःसदमित्वाहवामहे
॥ ८२ ॥ एषतेरुद्रभागःसहस्वस्राम्बिकयातञ्जुपस्व स्वाहैषतेरु
द्रभागऽआखुस्तेपशुः ॥ ८३ ॥ अवरुद्रमदीमह्यवदेवन्त्र्यम्ब
कम् ॥ यथानोव्वस्यसस्करद्यथानः श्रेयसस्करद्यथानोव्व्यव
साययात् ॥ ८४ ॥ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥
बाहुभ्यामुततेनमः ॥ ८५ ॥ यातेरुद्रशिवातनूरघोरापाप
काशिनी ॥ तयानस्तन्वाशन्तमयागिरिशन्ताभिचाकशीहि
॥ ८६ ॥ नतम्विदाथयइमाजजानान्यद्युष्माकमन्तरम्ब
भूव ॥ नीहारेणप्रावृताजल्प्याचासुतृपऽउक्थशासश्चरन्ति
॥ ८७ ॥ विश्वकर्म्माह्यजनिष्ट देवऽआदिद्गन्धर्व्वोऽअभव-
द्द्वितीयः तृतीयःपिताजनितौषधीनामपाङ्गर्भंव्व्यदधात्पुरुत्रा
॥ ८८ ॥ मीढुष्टम शिवतम । शिवोनःसुमनाभव ।

परमेव्वृक्षऽआयुधन्निधाय कृत्तिव्वसानऽआचरपिनाकम्बिभ्रदा
गहि ॥ ८९ ॥ विकिरिद्रविलोहित । नमस्तेऽअस्तुभ-
गवः ॥ यास्तेसहस्रꣳहेतयोन्न्यमस्म्मन्निवपन्तुताः ॥९०॥
सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥ तासामीशानोभगवः
पराचीनामुखाकृधि ॥ ९१ ॥ असङ्ख्यातासहस्राणि । येरुद्रा
ऽअधिभूम्याम् ॥ तेषाँ सहस्रयोजनेवधन्न्वानितन्मसि ॥९२॥
वषꣳसोमव्वतेवत्रमनस्तनूपुबिभ्रतः ॥ प्रजावन्तःसचेमहि ॥९३
एषते रुद्द्रभागःसहस्वसाम्बिकयातञ्जुपस्वस्वाहैपतेरुद्द्रभाग
ऽआखुस्तेपशुः ॥ ९४ ॥ अवरुद्द्रमदीमह्यवदेवन्त्र्यम्बकम् ॥
यथानो व्वस्यसस्करद्यथानःश्रेयसस्करद्यथानोव्व्यवसाययात्
॥ ९५ ॥ भेषजमसि । भेषजंगवेश्वायपुरुषायभेषजम् । सुख-
म्मेषायमेष्ष्यै ॥ ९६ ॥ त्र्यम्बकंय्यजामहे । सुगन्धिम्पुष्टि
वर्द्धनम् । उर्व्वारुकमिवबन्धनान्मृत्योर्म्मुक्षीयमामृतात् । त्र्य
म्बकंय्यजामहे सुगन्धिम्पतिवेदनम् । उर्व्वारुकमिवबंधना-
दितोमुक्षीयमामुतः ॥ ९७ ॥ एतत्तेरुद्द्रावसन्तेनपरोमूजवता
तोहि ॥ अवततधन्वा पिनाकावसःकृत्तिवासाऽअहिꣳसन्नःशिवो
तोहि ॥ ९८ ॥ त्र्यायुषञ्जमदग्नेःकश्यपस्यत्र्यायुषम् ॥ यद्दे
वेषुत्र्यायुषंतन्नोऽअस्तुत्र्यायुषम् ॥ ९९ ॥ शिवोनामासिस्व
धितिस्तेपितानमस्तेऽअस्तुमामाहिꣳसीः ॥ निवर्त्तयाम्म्यायुषे
न्नाद्यायप्प्रजननायरायस्पोषाय सुप्रजास्त्वायसुवीर्याय ॥१००॥

इत्यनेन शिवोपरि महाभिषेकं कुर्यात् ॥ इतिशतरुद्री ॥

आचमनम्, वस्त्रम् ॥

माया चित्रपटच्छन्न निजगुह्योरु तेजसे ।
निरावरण विज्ञानवासस्ते[1] कल्पयाम्यहम् ॥

उत्तरीय वस्त्रम् ॥

यमाश्रित्य महामाया जगत्संमोहिनी सदा ।
तस्मै ते परमेशाय कल्पयाम्युत्तरीयकम् ॥

यज्ञोपवीतम् ॥

यस्य शक्तित्रयेणेदं संप्रोतमखिलं जगत् ।
यज्ञसूत्राय तस्मै ते यज्ञसूत्रं प्रकल्पये ॥

आभूषणाभावे अक्षतान् ॥

स्वभावसुंदरांगाय नानाशक्त्याश्रयाय ते ।
भूषणानि विचित्राणि कल्पयाम्यमरार्चितम् ॥

गंधम् ॥

परमानन्दसौभाग्य परिपूर्णदिगन्तरम् ।
गृहाण परमंगंधं कृपया परमेश्वर ! ॥

---

टिप्पणी १-पीतं शिवाणी सितंशम्भो रक्तंविघ्नार्क शक्तिषु ।
सच्छिद्रं मलिनंजीर्णं त्यजेत्तैलादि दूषितम् ॥
स्नान यज्ञोपवीत नैवेद्यान्तेषु दत्तमाचमनीकम् ॥

गंधमुद्रा ॥

कनिष्ठांगुष्ठ योगेन गंधमुद्रांप्रदर्शयेत् ।

नाना परिमल सौभाग्य द्रव्याणि च समर्पयामि ॥

अक्षतान् ॥

अक्षताश्च सुरश्रेष्ठ ! कुङ्कुमाक्ताः सुशोभिताः ।

मया निवेदिता भक्त्या गृहाण परमेश्वर ! ॥

पुष्पाणि

तुरीय वनसंभूतं नानागुणमनोहरम् ॥

अमन्दसौरभंपुष्पं गृह्यतामिदमुत्तमम् ।

तर्जन्यंगुष्ठयोगेन पुष्पमुद्रां प्रदर्शयेत् ॥

ऋतुकालोद्भवानि पुष्पाणि ॥

सेवन्तिका वकुल चम्पक पाटलाब्जैः ।

पुन्नाग जाति करवीर रसाल पुष्पैः ॥

बिल्वप्रवाल तुलसीदल मालतीभिः ।

त्वां पूजयामि जगदीश्वर ! मे प्रसीद ॥

लोकमोहनम् ॥

मूलमंत्रेण पुटितमेकैकं मातृकाक्षरम् ।

ईअन्यस्तेदेवतांगेषु योगोयंलोक मोहनम् ॥

शिवे वर्ज्यं पुष्पाणि ॥

बन्धूकं केतकी कुन्दं केसरं कुटजं जयाम् ।
शंकरेनार्पयेद्विद्वान् मालतीयूथिकामपि ॥
निर्गन्ध केश कीटादि दूषितं चोग्रगंधकम् ।
मलिनंतुच्छ संस्पृष्टमाघ्रातं स्वविकासितम् ॥
अशुद्धभाजनानीतं स्नात्वानीतं च याचितम् ।
शुष्कं पर्युषितं कृष्णं भूमिगं नार्पयेत्सुमम् ॥
पत्रंपुष्पं[१] फलंदेवे न प्रदद्यादधोमुखम् ।
पुष्पाञ्जलौ न तद्दोषस्तथापर्युषितस्य च ॥

बिल्वपत्रम् ॥

त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिरायुधम् ।
त्रिजन्मपाप सहारमेकबिल्वं शिवार्पणम् ॥

बिल्वस्तोत्रम् ॥

ॐ त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिरायुधम् ।
त्रिजन्म पापसंहारमेकबिल्वं शिवार्पणम् ॥ १ ॥
अखंडं बिल्वपत्रं च पूजयेन्नंदिशङ्करम् ।

---

१ पत्रं वा यदि वा पुष्पं फलंनेष्टमधोमुखम् ।
यथोत्पन्नं तथादेयं बिल्वपत्रमधोमुखम् ॥
षण्मासानन्तरंबिल्वपत्रं पर्युषितं भवेत् ।
पूज्या एतेन वै देवा सूर्यं लम्बोदरौ बिना ॥
वज्रभागं विहायैव बिल्वपत्रं समर्पयेत् ॥

मुच्यते सर्वपापेभ्यो एकबिल्वं शिवार्पणम् ॥ २ ॥
शालग्रामे तु विप्राणां तड़ागादिषु कूपयोः ।
यज्ञकोटि सहस्रेण एकबिल्वं शिवार्पणम् ॥ ३ ॥
मेरु कांचनं यद्दानं गवां कोटि शतैरपि ।
कन्या कोटि महादानमेकबिल्वं शिवार्पणम् ॥ ४ ॥
नवर्ण न च गन्धं च न पुष्पं न च कोमलम् ।
यज्ञ कोटि सहस्रैस्तु एकबिल्वं शिवार्पणम् ॥ ५ ॥
दर्शनं बिल्वपत्रस्य स्पर्शनं पापनाशनम् '
यज्ञ कोटि समंदानं एकबिल्वं शिवार्पणम् ॥ ६ ॥
त्रिशाखैः बिल्वपत्रैश्च अछिद्रैः कोमलैः शुभैः ।
तव पूजां करिष्यामि एकबिल्वं शिवार्पणम् ॥ ७ ॥
तुलसी बिल्वनिंबैश्च जंबीरैरामलैः शुभैः ।
पंचबिल्वमितिख्यातं प्रसीद परमेश्वर ॥ ८ ॥
नमस्कारादि संयुक्तं शिव इत्यक्षरद्वयम् ।
जिह्वाग्रे वसते यस्य सफलं तस्य जीवनम् ॥ ९ ॥
उमया सह देवेश वाहनं नन्दि भूषणम् ।
तव पूजां करिष्यामि एकबिल्वं शिवार्पणम् ॥ १० ॥
अज्ञानेन कृतंपापं स्मरणेन विनश्यति ।
तव पूजां करिष्यामि एकबिल्वं शिवार्पणम् ॥ ११ ॥

इति बिल्वस्तोत्रम् संपूर्णम् ॥

दक्षिण करस्याङ्गुष्ठानामिकाभ्यां बिल्वपत्रं शिवोपरि धारणीयम् तथा च वामाङ्गुष्ठतर्जनीभ्यान्तमपसार्य वामकरतलेन शिवोपरि संमार्ज्य पुनरन्यबिल्वपत्रार्पणकृते सति झटितिसर्वकार्याणि सिद्ध्यन्तीति शैवागम शिवरहस्ययोश्च ।

ॐ रुद्राय शूलपाणये स्वाहा । अनेन समर्पणम् ॥

पुष्प पूजाविधायेत्थं कुर्यादावरणार्चनं ।

अथ आवरण पूजनम् ॥

पुष्पाञ्जलिमादाय ॥

( मू० ) सच्चिन्मयपरोदेव ! परामृत रसप्रिय ! ॥
देहि मृत्युञ्जय ! मेऽनुज्ञां परिवारार्चनाय हि ॥

## अथ पंच कोणेषु पंचवक्त्र यजनम् ॥

### प्रथम पश्चिम वक्त्र पूजनम् ॥

ॐ सद्योजाताय पादाभ्यां पश्चिमवक्त्राय नमः । ॐ सद्योजातायेति पादयोर्न्यस्य ॥ सद्योजात इति सद्य ऋषिः ब्रह्मादेवता गायत्री छन्दः श्वेतवर्णं हंसवाहन पश्चिम वक्त्र पृथ्वीतत्वं पश्चिम वक्त्र पूजने विनियोग । ॐ

ॐ ब्रह्मणे नमः ॥ ॐ ह्रां इषु बाण[१] मुद्रां प्रदर्श्य । ॐ सद्यो जातं प्रपद्यामि सद्यो जातायवै नमोनमः ॥ भवे भवेनाति भवे भवस्व मां भवोद्भवाय नमः ॥

अथ पश्चिम वक्त्र कला पूजनम् ॥

ॐ ऋं ऋध्यै नमः । ॐ ॠं वृद्धयै नमः ॥ ॐ धृं धृत्यै नमः । ॐ लं लक्ष्म्यै नमः ॥ ॐ में मेधायै नमः । ॐ कां कान्त्यै नमः ॥ ॐ श्रं श्रद्धायैनमः । ॐ प्रं प्रभायै नमः॥ सद्योजात कलाह्येतारष्टौ च परिकीर्तिताः । श्वेताक्षतैः श्वेत पुष्पैः पूजयेद्धंसवाहनम् ॥ सिद्धयन्ति सर्वकार्याणि प्राप्यते च न संशयः ॥

अथ ध्यानम् ॥

प्रालेयामल बिन्दुकुन्दधवलं गोक्षीरफेनप्रभं ।
भस्माभ्यंग मनंगदेह दहनज्वालावली लोचनम् ॥

---

टिप्पणी—१ इषु बाणमुद्रा लक्षणम् ॥
वामस्य मध्यमाग्रन्तु तर्जन्यग्रेनियोजयेत् ।
अनामिकां कनिष्ठकांतस्यांगुष्ठेन पीडयेत् ॥ १ ॥
दर्शयेद्दक्षिणः स्कन्धे धनुर्मुद्रेयमीरिता ।
दक्षिण मुष्टिस्थ तर्जन्या दीर्घया बाण मुद्रिकेति ॥ २ ॥

ब्रह्मेन्द्रादि मरुद्गणैः स्तुतिपरैरभ्यर्चितं योगिभिः ।
वन्देहं सकलं कलंकरहितं स्थाणोर्मुखं पश्चिमम् ॥१॥

इति ध्यात्वा पुष्पाञ्जलिं यंत्रे दद्यात् ॥

## अथ उत्तर वक्त्र पूजनम् ॥

ॐ वाम देवाय गुह्ये उत्तर वक्त्राय नमः। ॐ वामदेवायेतिगुह्येन्दस्य वामदेवेति वामदेव ऋषिर्विष्णुर्देवता जगतीछन्दः कृष्णवर्णं गरुड़ वाहन उत्तर वक्त्र आपस्तत्वं उत्तर वक्त्र पूजने विनियोगः ॥ ॐ विं विष्णवे नमः ॥ ॐ ह्रीं पद्ममुद्रां¹ प्रदर्श्य ॥ ॐ वाम देवाय नमो ज्येष्ठाय नमो श्रेष्ठाय नमो रुद्राय नमो कालाय नमो कल विकरणाय नमो बल विकरणाय नमो बल प्रमथनाय नमः। सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥

### उत्तर वक्त्र कला पूजनम् ॥

रजो रक्षा इति ॥ ॐ रं रजसे नमः। ॐ रं रक्षायै नमः ॥ ॐ क्षि क्षित्यै नमः। ॐ पां पाल्यै नमः ॥ ॐ कां कामायै नमः। ॐ सं संजीवन्यै नमः॥ ॐ किं क्रियायै नमः। ॐ बु बुद्ध्यै नमः ॥ ॐ प्रि प्रियायै नमः ॥ ॐ

(१) पद्म मुद्रा लक्षणम् ॥ करौतु संहतौकृत्वा सन्मुखाबुन्नतौ गुली। तलान्तर्मीलितांगुष्ठौ कुर्यादेपाब्जमुद्रिकेति ॥

धां धात्र्यै नमः । ॐ भ्रां भ्रामण्यै नमः ।। ॐ मों मोहायै नमः । ॐ ज्वं ज्वरायै नमः ।। रजो रक्षावितीपाली कामा संजीवनी तथा। क्रियाबुद्धी प्रियाधात्री वा भ्रामणी मोहाज्वरा ॥ वामदेव कलाह्येतास्त्रयोदश वरानने । तुलसोशतपत्रैश्च पूजयेद्गगरुड वाहनम् ॥ सर्वारिष्ट (सर्वदोष) विनाशाय प्राप्यतेऽपि च सम्पदः ॥

अथ ध्यानम् ॥

गौरं कुंकुम पिंजरं सुतिलकं व्यापांडु मंडस्थलम् ।
भ्रूविक्षेप कटाक्ष वीक्षणलसत्संसिक्त कर्णोत्पलम् ॥
स्निग्धं बिंबकलाधरं प्रहसितं नीलालकालंकृतम् ।
वन्दे पूर्णशशांक मंडल निभं वक्त्रं हरस्योत्तरं ॥ १ ॥

इति ध्यात्वा पुष्पाञ्जलिं यंत्रे दद्यात् ॥

## अथ पूर्व वक्त्र पूजनम् ॥

ॐ तत्पुरुषायमुखे पूर्ववक्त्राय नमः। तत्पुरुषमिति ध्यायन् तत्पुरुषं मुखेन्यस्य ॥ तत्पुरुषेतितत्पुरुषऋषिः सूर्योदेवता गायत्री छन्दः रक्तवर्ण अश्ववाहन पूर्ववक्त्र वायुस्तत्वं पूर्ववक्त्रपूजने विनियोगः। ॐ आदित्याय नमः॥

---

वामदेव सुवर्णाभं दिव्याम्ब गणसेवितं ।
अतिरिक्तमुमाकान्तं वन्दे हं स्युत्तरं मुखम् ॥

हैं कवच[1] मुद्रां प्रदर्श्य । ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नोरुद्रः प्रचोदयात् ॥ ॐ निं निवृत्यै नमः। ॐ प्रं प्रतिष्ठायै नमः॥ ॐ विं विद्यायै नमः। ॐ शां शान्त्यैनमः॥

अथ पूर्व वक्त्र कला पूजनम् ॥

निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च।
तत्पुरुषस्य कलाह्येताश्चतुर्थ्यैव न संशयः ॥
दूर्वाङ्कुरैः रक्तपुष्पैः पूजयेदश्व वाहनम्।
आयुष्यं वर्द्धते तस्य चतुर्गौ फलदायकः ॥

अथ ध्यानम् ॥

संवर्ताग्नितडित्प्रतप्त कनकं संसिद्धि तेजोरुणम्।
गंभीरस्मित निसृतांशुवहनं प्रोद्भासिताम्राधरम् ॥
बालेन्दुद्युति लोलपिंगलजटा हारप्रवद्धोरगम्।
वन्दे सिद्ध सुरासुरैः प्रणमितं पूर्वमुखं शूलिनः ॥३॥

इति ध्यात्वा पुष्पाञ्जलिं यंत्रे दद्यात्।

## अथ दक्षिण वक्त्र पूजनम् ॥

ॐ अघोरायहृदये दक्षिण वक्त्राय नमः। अघोरे हृदये न्यस्य। ॐ अघोरेत्यस्य।घोरऋषिः रुद्रो देवता अनुष्टुपछन्दः

---

(१) करद्वहांगुलयोश्चर्मणि स्युरितितल्लक्षणम्।
सर्वाङ्गस्य अनाभेः पादयो कवचबन्धनम् ॥
इति अनाभेः स्कन्धात् ॥

नीलवर्णं कूर्मवाहन दक्षिण वक्त्र पूजने विनियोगः ॥ ॐ ह्रीं ज्ञान मुद्रां प्रदर्श्य(१) ॐ अघोरेभ्योथ घोरेभ्यो घोर घोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यः नमस्तेऽअस्तु रुद्र रूपेभ्यः नमः सदा शिवाय ॥

दक्षिण वक्त्र कला पूजनम् ॥

ॐ तं तमसे नमः । ॐ मों मोहायै नमः ॥ ॐ क्षं क्षयायै नमः । ॐ तृं तृष्णायै नमः ॥ ॐ व्यां व्याधिरूपायै नमः ॥ ॐ मृं मृत्युरूपायै नमः । ॐ तृं तृषायै नमः ॥ तमो मोहाक्षयातृष्णा व्याधिमृत्यु क्षुधातृषा । अघोरस्य कला ह्यष्टौ च परिकीर्तिताः ॥ नीलोत्पलैः कर्णवीरैः पूजये त्कूर्मवाहनम् ॥ सर्वव्याधि विनाशाय ज्ञानमोक्ष प्रसाधकम् ॥

अथ ध्यानम् ॥

कालाभ्रभ्रमराञ्जनाचलनिभं व्यावर्तपिंगेक्षणम् ।
खण्डेन्दुद्वयनिसृतं सुदशन प्रोद्भिन्नदंष्ट्रांकुरम् ॥
सर्पप्रोत कपाल शक्ति सकल व्याकीर्ण विच्छेखरम् ।
वन्दे दक्षिणमोरवरस्य कुटिलं भ्रूभंग रौद्रंमुखं ॥४॥

इति ध्यात्वा पुष्पाञ्जलिं यंत्रे दद्यात् ।

---

(१) तर्जन्यंगुष्ठकौसक्तावग्रतो हृदिविन्यसेत् ।
ज्ञानमुद्रा भवेदेषेवित्वक्षचरणम् ॥

स्वाहा शिखायैवषट् शिखादेवतायै वायव्ये ॥ ॐ ह्रौं ॐ जूं सः भूर्भुवः स्वः उर्वारुकमिव बन्धनात् ॐ नमो भगवते रुद्राय त्रिपुरान्तकाय ह्रौं ह्रौं कवचायहुँ कवच देवतायै ईशान्ये ॥ ॐ ह्रौं ॐ जूं सः भूर्भुवः स्वः मृत्योर्मुक्षीयॐनमो भगवते रुद्राय त्रिलोचनाय ऋग्यजुः साममंत्राय नेत्रत्रयायवौषट् नेत्रदेवतायै पूर्वे॥ ॐ ह्रौं ॐ जूं सः भूर्भुवः स्वः मामृतात् ॐ नमो भगवते अग्नित्रयाय ज्वल २ मांरक्ष २ अघोरास्त्राय फट् अस्त्रदेवतायै ॥ ( सर्वत्र ) सर्वे दिक्षु ॥

करयोः पुष्पाणि गृहीत्वा ॐ अभीष्ट सिद्धिम्मे देहि शरणागत वत्सल ! भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥ यन्त्रे पुष्पाञ्जलिं दद्यात् ॥

अष्टदले ईशनादि क्रमेण ॥

ॐ ई ईशानाय सूर्यमूर्तये नमः ॥ ॐ मं महादेवाय सोम मूर्तये नमः ॥ ॐ सं सर्वाय क्षितिमूर्तये नमः ॥ ॐ भं भवाय जलमूर्तये नमः ॥ ॐ रुं रुद्राय अग्निमूर्तये नमः । ॐ उं उग्राय वायुमूर्तये नमः ॥ ॐ भीं भीमाय आकाश मूर्तये नमः ॐ पं पशुपतये यजमानमूर्तये नमः ।

पुष्पांजलिं गृहीत्वा ॥

मू० देवेश ! भक्त सुलभ ! परिवार समन्वित ! ।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥ ३ ॥

अष्टदले पूर्वादि क्रमेण प्रादक्षिण्येन ॥

सर्वाधवल प्रभाध्येयाः ॥

ॐ रं रमायै नमः । ॐ रां राकायै नमः ॥ ॐ प्रं प्रभायै नमः । ॐ ज्यों ज्योत्स्नायै नमः ॥ ॐ पूं पूर्णायै नमः । ॐ ऊं ऊषायै नमः ॥ ॐ पूं पूरण्यै नमः । ॐ सुं सुधायै नमः ॥ पुष्पांजलिं गृहीत्वा ॥

मू० देवेश ! भक्त सुलभ ! परिवार समन्वित ! ।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥ ४ ॥

सर्वाश्याम प्रभाध्येयाः ॥

ॐ विं विश्वायै नमः ॐ वं चन्द्रायै नमः ॥ ॐ सिं सितायै नमः । ॐ प्रं प्रह्वायै नमः ॥ ॐ सां सारायै नमः । ॐ सं सन्ध्यायै नमः ॥ ॐ शिं शिवायै नमः । ॐ निं निशायै नम ॥ पुष्पांजलिं गृहीत्वा ॥

मू० देवेश ! भक्त सुलभ ! परिवार समन्वित ! ।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥ ५ ॥

सर्वाअरुण प्रभाध्येयाः ॥

ॐ आं आर्यायै नमः । ॐ प्रं प्रज्ञायै नमः ॥ ॐ प्रं प्रभायै नमः । ॐ में मेधायै नमः ॥ ॐ शां शान्त्यै नमः । ॐ कां कान्त्यै नमः॥ ॐ धृं धृत्यै नमः । ॐ मं मत्यै नमः॥

पुष्पांजलिं गृहीत्वा ॥

मू० देवेश ! भक्त सुलभ ! परिवार समन्वित ! ।
भक्त्या समर्पये तुभ्यं षष्ठयावरणार्चनम् ॥ ६ ॥

सर्वापीत प्रभाध्येयाः ॥

ॐ धं धरायै नमः । ॐ उं उमायै नमः ॥ ॐ पां पावन्यै नमः । ॐ पं पद्मायै नमः ॥ ॐ शां शान्तायै नम ॐ मों मोघायै नम ॥ ॐ जं जयायै नमः ॥ ॐ अं अमलायै नमः ॥ पुष्पाञ्जलिं गृहीत्वा ॥

मू० देवेश ! भक्त सुलभ ! परिवार समन्वित ! ।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥ ७ ॥

ॐ अं अनन्ताय नमः । ॐ सूं सूक्ष्माय नमः ॥ ॐ शिं शिवोत्तमाय नमः । ॐ एं एकनेत्राय नमः ॥ ॐ एं एकरुद्राय नम । ॐ त्रिं त्रिमूर्तये नम ॥ ॐ श्रीं श्रीखण्डाय नम । ॐ शिं शिखण्डिने नम ॥ पुष्पाञ्जलिं गृहीत्वा ॥

मू० देवेश ! भक्त सुलभ ! परिवार समन्वित ! ।
भक्त्या समर्पये तुभ्यं अष्टमावरणार्चनम् ॥ ८ ॥

ॐ उं उमायै नमः ॐ चं चण्डेश्वराय नम ॥ ॐ नं नन्दिने नमः । ॐ मं महाकालाय नम ॥ ॐ गं गणेशाय नम । ॐ वृं वृषभाय नमः ॥ ॐ भृं भृङ्गरीटिने नम । ॐ स्कं स्कन्दाय नमः ॥

पुष्पाञ्जलिं गृहीत्वा ॥

मू० देवेश ! भक्त सुलभ ! परिवार समन्वित ! ।
भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ॥९॥

पूर्वादिक्रमेण ॥

ॐ आं ब्राह्म्यै नमः । ॐ मां माहेश्वर्यै नमः ॥ ॐ कौं कौमार्यै नमः ॐ वैं वैष्णव्यै नमः ॥ ॐ वां वाराह्यै नमः । ॐ इं इन्द्राण्यै नमः ॥ ॐ चां चामुण्डायै नमः । ॐ मं महालक्ष्म्यै नमः ॥ पुष्पांजलिं गृहीत्वा ॥

मू० देवेश ! भक्त सुलभ ! परिवार समन्वित ! ।
भक्त्या समर्पये तुभ्यं दशमावरणार्चनम् ॥ १० ॥

भूपुरे पूर्वादिक्रमेण ।

ॐ लं इन्द्राय नमः पूर्वे । ॐ रं अग्नये नमः अग्निकोणे ॥ ओं मं यमाय नमः दक्षिणे । ओं क्षं निर्ऋतये नमः निर्ऋतिकोणे । ॐ वं वरुणाय नमः पश्चिमे ॥ ओं यं वायवे नमः वायौ । ओं सं सोमाय नमः उत्तरे ॥ ओं हं ईशानाय नमः ईशाने ॥ ओं ह्रीं अनन्ताय नमः इन्द्र ईशानयोर्मध्ये ॥ ओं आं ब्रह्मणे नमः निर्ऋति पश्चिमयोर्मध्ये ॥

पूर्वादि क्रमेण ।

ओं वं वज्राय नमः । ओं शं शक्तये नमः ॥ ओं दं दण्डाय नमः । ओं खं खड्गाय नमः ॥ ओं पां पाशाय नमः । ओं अं अंकुशाय नमः । ओं गं गदायै नमः ॥ ओं शूं त्रिशूलाय

नमः । चं चक्राय नमः ॥ ओं पं पद्माय नमः ॥ मध्ये ॐ शिं शिवाय नमः । ईशाने, ॐ विं विष्णवे नमः ॥ अग्नये, ॐ सुं सूर्याय नमः । नैर्ऋतये, ॐ गं गणेशाय नमः । वायव्ये, ॐ दुं दुर्गायै नमः ॥

ओं देवेश ! भक्त सुलभ परिवार समन्वित ॥
भक्त्या समर्पये तुभ्य मा वरणं का दशार्चनम् ॥
एवं परिवारं पूजयित्वा उपचारान्तरं कुर्यात् ॥

## शैवागमोक्त पूजनविधिः ॥

धूप पात्रं फट् मंत्रेण प्रोक्ष्य । नमः पुष्पंदत्वा वाम तर्जन्या संस्पृशन् पूजित घंटांवादयेत् । दक्ष हस्तेन गुग्गुलं दहेत् ॥ मूलं ॐ वनस्पति रसोपेतो गंधाढ्यः सुमनोहर । आघ्रेयः सर्वदेवानां धूपोयं प्रतिगृह्यताम् ॥ सांगाय सपरिवाराय महामृत्युञ्जय देवाय धूपमाघ्रापयामि नमः ॥ अर्घ्यं जलमुत्सृज्य ॥ तर्जन्यंगुष्ठ योगेन धूप मुद्रांप्रदर्शयेत् । ओंजयध्वनिमातः स्वाहेति गंधाक्षत पुष्पैः घंटांसंपूज्य वादयेत् ॥ देवतांस्तुत्याकीर्तयेत् । एवं दीपपात्रं फट् मंत्रेण प्रोक्ष्य ॥ नमः पुष्पं दत्वा वाम तर्जन्यास्पृशन् दक्षिण हस्तेन घंटां वादयेत् । मूलं ॐ सुप्रकाशो महादीपः सर्वतस्तिमिरापह ॥ सबाह्याभ्यंतरं ज्योतिर्दीपोयं प्रतिगृह्यताम् । देवतानामिदेशे नीचैः ॥ नेत्रदेशे उच्चैः दर्शयेत् । सांगाय सपरिवाराय

महामृत्युंजयाय प्रत्यन्न दीपं दर्शयामि नमः ॥ घृतदोपो दक्षिणे च तैलदोपस्तु वामतः ॥ सितवर्तिर्दक्षिणे च रक्तवर्तिस्तु वामतः । जलमुत्सृज्य ॥ मध्यमांगुष्ठ योगेन दीप मुद्रां प्रदर्शयेद् घंटां वादयेच्च ।

स्वर्णादिपात्रे नैवेद्यं धृत्वार्पणं कुर्यात् ॥

नैवेद्यं "फट्" मंत्र जलेन संप्रोक्षयेत् ॥ शैवागमेतु ॥ ओं जूं सः वौपट् इति मंत्रेण सदर्भ शंखस्थ जलेन सप्तधा प्रोक्ष्य ततश्चक्र[१] मुद्रयाभिरक्ष्य वायु (यं) बीजेन द्वादशवाराभिमंत्रित जलेन हविः प्रोक्ष्य । तदुत्थ वायुना तद्दोषं संशोष्य ॥ दक्षिण करतलेऽग्नि (रं) बीजं विचिन्त्य तत्पृष्टे वाम करतलं कृत्वा नैवेद्यं प्रदर्श्य तदुत्थाग्निना तद्दोषं दग्ध्वा वाम करतलेऽमृत (वं) बीजं विचिन्त्य तत्पृष्टलग्नं दक्षिण करतलं कृत्वा नैवेद्यं प्रदर्श्य तदुत्थामृतधारया प्लावितं विभाव्य मूलमंत्रित जलेन संप्रोक्ष्य, तदखिलममृतात्मकं ध्यात्वा तत्स्पृष्ट्वा मूलमंत्रमष्टधाजप्त्वा धेनुमुद्रां प्रदर्श्य जलगंध[२] पुष्पैरभ्यर्च्य देवतायै पुष्पांजलिं समर्प्य

---

चक्रमुद्रा ॥

१—हस्तौ तु सम्मुखौ कृत्वा संलग्नौ सुप्रसारितौ ॥
कनिष्ठांगुष्ठकौ लग्नौ मुद्रैषा चक्र संज्ञिता ॥

२— सत्यन्त्वर्तेन परिषिंचामीति प्रातः ॥ ऋतंत्वासत्येनपरिषिंचामीति सायं ।

तन्मुखात्तेजो गतमितिध्यात्वा वामांगुष्ठेन मुद्रय नैवेद्यपात्रं स्पृष्ट्वा दक्षिणकरेण जलं गृहीत्वा। मूलमंत्र स्वाहान्तम् पठित्वा ॐ सत्पात्रसिद्धि सुहविर्विविधानेक भक्षणम् ॥ निवेदयामि देवेश ! सानुगाय गृहाणतत् ॥

जवनिकांकृत्वा पद्यद्वयंपठेत् ॥

ब्रह्मेशाद्यैः परित उरुभिः सूपविष्टैः समेतैर्लक्ष्याशिंजद्वलय करयासादरं वीज्यमानः। नर्मक्ष्वेलो प्रहसन् मुखंव्याप्नु- वन्पंक्ति मध्यं, भुक्तापात्रे कनकघटिते षड्रसंपार्वतीश !॥ १ ॥ शाल्योभक्तं सुभक्तं शिशिर करशितं पायसापूप सूपं, लेह्यं पेयं च चोष्यं सितममृतफलं द्वारिकाद्यं सुखाद्यं। आज्यं प्राज्यं मभोज्यं नयनरुचिकरं राजिकैलामरीच स्वादीयः शाक राजी परिकरममृताहार जोषंजुषस्व ॥२॥ मूल सां० सप० महादेवाय० नैवेद्यंसमर्पयामि नमः। इति जलमुत्सृज्य नैवेद्य मुद्रां प्रदर्शयेत् ॥ ततः सपुष्पाभ्यां हस्ताभ्यां अंगुष्ठानामि- काभ्यां नैवेद्यपात्रं त्रिःप्रोद्धरन्॥ निवेदयामि भवतेदं जुषाणेदं हविश्शिव॥ ॐअमृतोपस्तरणमसि स्वाहेति देवकरेजलं सम- र्पयेत्॥ वामकरेण विकचोत्पल सदृशींग्रासमुद्रांप्रदर्श्य दक्षिण करेण समंत्राः प्राणादिमुद्राः प्रदर्शयेत् ॥ ॐ प्राणाय स्वाहा अंगुष्ठानामिकाकनिष्ठाभिः॥ ॐ अपानाय स्वाहा अंगुष्ठतर्जनी मध्यमाभिः ॥ ॐ उदानाय स्वाहा। इत्यंगुष्ठ मध्यमानामिका भिः॥ ॐव्यानाय स्वाहा इत्यंगुष्ठतर्जनी मध्यमानामिकाभिः॥

ऊँ समानाय स्वाहा ॥ इत्यंगुष्ठादि सर्वाङ्गुलीभिः । मूलं मां० स० महामृत्युञ्जयाय नैवेद्यं समर्पयामि नमः ॥ ततो आपोशानं दद्यात् ॥ ऊँ अमृतोपिधानमसि स्वाहा ॥ मूलं ॐ समस्त देव देवेश सर्वतृप्तिकरं परम् ॥ अखंडानन्द सम्पूर्ण गृहाणाजल मुत्तमम् ॥ इत्यापोशानं (आचमनं) दत्वागतसारं नैवेद्यं नैऋत्यांदिशि संस्थाप्य ॥ कर्पूरादि नाना सुगन्ध मिश्रित ताम्बूलमानीय ॥ "फट्" मन्त्रेण संप्रोक्ष्य, ॐ वनिस्पति देवताय ताम्बूलाय नमः इति संपूज्य ॥ मूलं ऊँ नारिकेरं स कर्पूरपूगमार्गैरलंकृतम्॥ नागवल्ली दलोपेतं ताम्बूलं प्रतिगृह्यताम् ॥ मा० स० महामृत्युञ्जयाय एतत्ते ताम्बूलं समर्पयामि नमः ॥ इति समर्प्य ॥ मूलेन, दर्पणं, छत्रं, चामरं, नृत्य, गीतादिकं समर्प्य सुप्रसन्नं सांब महामृत्युञ्जयं विभाव्य ॥ यथा ॥

बुद्धिःसवासनावल्लभदर्पणंमंगलानि च ।
मनोवृत्तिर्विचित्राते नृत्यरूपेण कल्पिता ॥

ध्वनयोगीतरूपेण शब्दवाद्य प्रभेदतः ।
छत्राणि नवपद्मानि कल्पितानि मयाप्रभो ॥

सुषुम्णाध्वजरूपेण प्राणाद्याश्चामरात्मना ।
अहंकारो गजरूपेन वेगःवल्लभो रथात्मनः ॥

इन्द्रियाण्यश्वरूपाणि शब्दादिरथ वर्त्मना ।

मनःप्रग्रहरूपेण बुद्धिःसारथिरूपवः ॥
सर्वमन्यत्तथावक्लृप्तं त्वदोपकरणात्मना ॥

मूलं पुष्पांजलिं दत्वा प्राग्वत्त्रिः सम्पूज्य संतर्प्य नीराजनं ॥ रं इति प्रज्वाल्य श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं न्लूं ह्रीं श्रीं इति गंधाक्षत पुष्पैःसम्पूज्य चक्रमुद्रां १ प्रदर्श्यास्त्रेण प्रोक्ष्य घंटावादन पूर्वकं नववारं मूलेन आरातिमन्त्रेण वा नीराजयेत् ॥

## शिवनीराजनम् ॥

ॐ जय गंगाधरहर, शिव जय गिरिजाधीश ! । शिव० ॥
त्वं मां पालयनित्यं,कृपया जगदीश ! ॥१॥ ॐ हर हर हरम०
कैलासे गिरिशिखरे, कल्पद्रुम विपिने । शिव० ॥
गुंजति मधुकरपुंजे,कुञ्जवने गहने ॥२॥ ॐ हर हर हर म०
कोकिल कूजति खेलति, हंसावनललिता ॥ शिव० ॥
रचयति कलाकलापं, नृत्यतिमुदसहिता ॥३॥ ॐ हर हर०
तस्मिन्ललित सुदेशे, शालामणि रचिता । शिव० ॥
तन्मध्ये हरनिकटे, गौरीमुद सहिता ॥४॥ ॐ हरहरहर म०
क्रीडारचयतिभूषां, रञ्जितनिजमीशम् । शिव० ॥
इन्द्रादिक सुर सेवित, प्रणमतितेशीर्षम् ॥५॥ ॐ हरहरहर०

---

१ दर्पणी-मुद्रायाचक्रतं कर्मतदत्र्य फलप्रदम् ॥ इति तन्त्रान्तरे ७१पृ०

विबुधवधू बहुनृत्यति, हृदये मुदसहिता । शिव० ॥
किंनरगानं कुरुते, सप्तस्वर सहिता ॥६॥

ॐ हर हर हर महादेव ॥

धिनकत थैं थैं धिनकत, मृदंग वादयते । शिव० ॥
क्वणक्वण ललितावेणु, मधुरं नादयते ॥७॥ ॐ हरहर०
रुणुरुणु चरणे रचयति, नूपुरमुज्वलिता । शिव० ॥
चक्रावर्ते भ्रमयति, कुरुते तांधिकतां ॥८॥ ॐ हरहरहर म०
तां तां लुप चुप तालं, मधुरं नादयते । शिव० ॥
अंगुष्ठांगुलिनादं, लास्यकतां कुरुते ॥९॥ ॐ हरहरहर म०
कर्पूरद्युति गौरं, पंचानन सहितं । शिव० ॥
त्रिनयन शशिधर मौले, विषधर कंठयुतम् ॥१०॥ ॐ हर०
सुन्दरजटा कलापं पावकयुत भालम् । शिव ॥
डमरु त्रिशूल पिनाकं, कर धृत नृकपालम् ॥११॥ ॐ हर०
शङ्खनिनादं कृत्वा, भल्लरि नादयते । शिव० ॥
नीराजयते ब्रह्मा, वेदऋचां पठते ॥१२॥ ॐ हर हरहर म०
इति मृदुचरण सरोजं, हृदि कमले धृत्वा । शिव० ॥
अवलोकयति महेशं, ईशं अभिनत्वा ॥१३॥ ॐ हरहरहर०
रुण्ड रचित उरमाला, पन्नगमुपवीतम् । शिव० ॥
वाम विभागे गिरिजा, रूपं अति ललितम् ॥१४॥ ॐ हर०
सकलनारोरे मनसिज, कृत भस्माभरणम् । शिव० ॥
इति वृषभध्वज रूपं, तापत्रय हरणम् । १५॥ ॐ हर हर०

ध्यानं आरति समये, हृदये इति कृत्वा । शिव० ॥
रामं त्रिजटानाथं, ईशं अभिनत्वा ॥ ओं हरहरहर महादेव ॥
संगिनमेवं प्रतिदिन, पठनं यः कुरुते । शिव० ॥
शिवसायुज्यं गच्छति, भक्त्या यः शृणुते ॥१७॥ ओं हर०

भाषा की आरती ॥

जय शिव ओंकारा हर, जय शिव ओंकारा ।
ब्रह्मा विष्णु सदाशिव, अर्द्धाङ्गी धारा ॥ ॐ हरहरहर म०
एकानन चतुरानन पञ्चानन राजै । शिव०
हंसानन गरुडासन, वृषभासन साजै ॥ ॐ हरहरहर म०
दोयभुज चार चतुर्भुज, दश भुज ते सोहै । शिव०
तीनों रूप निरखता, त्रिभुवन जन मोहै ॥ ॐ हरहर म०
अक्षमाला वनमाला, रुण्डमाला धारी । शिव०
चन्दनमृगमद चन्दा, भाले शुभकारी ॥ ॐ हरहरहर म०
त्रिपुरारी शुभकारी, कर कमलाधारी । शिव०
भस्मारी दुःखहारी, शिर गंगाधारी ॥ ॐ हरहर म०
श्वेताम्बर पीताम्बर, बाघम्बर अंगे । शिव०
ब्रह्मादिक सनकादिक भृगादिक संगे ॥ ॐ हरहर०
करके मध्य कमण्डलु, चक्र त्रिशूल धरता । शिव०
जगकर्त्ता जगभर्त्ता, जग संहार कर्त्ता ॥ ॐ हरहर म०
ब्रह्मा विष्णु सदा शिव, जानत अविवेका । शिव०
प्रणवाक्षर गुण मध्ये, ये तीनों एका ॥ ॐ हरहरहर म०

काशी में विश्वनाथ विराजै, नन्दा ब्रह्मचारी ॥ शिव०
नित उठ दर्शन पावै महिमा अति भारी । ॐ हरहर०
सांब सदाशिव की आरति, जो कोई नर गावै। शिव०
कहत शिवानन्द स्वामी मनवांछित पावै ॥

ॐ हर हर हर महादेव ॥

एवं नीराजयित्वा ॥ ११ मूलेन वेदोक्त मन्त्रेण वा पुष्पाञ्जलिं कुर्यात् ॥

ॐ यज्ञेनयज्ञमयजन्तदेवास्तानि धर्म्माणि प्रथमान्यासन् ॥ तेहनाकम्महिमानः सचन्तयत्रपूर्वेसाध्याः सन्ति देवाः ॥ ॐ राजाधिराजाय प्रसह्यसाहिने नमोवयं वैश्रवणाय कुर्महे ॥ स मे कामान्कामकामायमह्यं ॥ कामेश्वरो वैश्रवणो ददातु ॥ कुबेराय वैश्रवणाय राजाधिराजाय महाराजाय नमः ॥ ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायीस्यात्सार्वभौमः सार्वायुष आन्तादापरार्धात् । पृथिव्यैः समुद्रपर्यन्ताया एकराडिति ॥ तदप्येष श्लोकोभिगीतोमरुतः परिवेष्टारोमरुत्तस्यावसन् गृहे ॥ आवीक्षितस्य कामप्रेर्विश्वे देवाः सभासद इति ॥

ॐ विश्वतश्चक्षुरुतविश्वतो मुखोविश्वतस्पात् ॥ संबाहुभ्यान्धमति संपतत्रैर्द्यावा भूमी

जनयन्देवएकः ॥ ॐ साङ्गाय सायुधाय सशक्तिकाय सपरिवाराय सवाहनाय महामृत्युञ्जय शिवाय नमः । मन्त्रपुष्पाञ्जलिं समर्पयामि नमः ॥

प्रार्थना ॥

पत्यश्व मातङ्ग रथवरूथिनीं सहस्रलक्षायुत कोटि भीषणाम् । अक्षौहिणीनां शतमाततायिनां छिन्द्यान्मृड घोरकुठारघातात्॥ निहन्तु दस्यून्प्रलयानलार्चिर्ज्वलत्त्रिशूलं त्रिपुरान्तकस्य । शार्दूलसिंहर्क्ष वृकादि हिंस्रान्सन्त्रासयत्वीश । धनुः पिनाकः॥

दुःस्वप्न दुःशकुन दुर्गति दौर्मनस्य-
दुर्भिक्ष दुर्व्यसन दुःसहदुर्यशांसि ।
उत्पात ताप विष भीतिमसद्ग्रहार्ति-
व्याधींश्च नाशयतु मे जगतामधीश ! ॥

इति पुनः पुनः प्रणम्य क्षमापय ॥

## अथ महामृत्युञ्जय मन्त्रन्यासः ॥

अमुकमासीयामुकपक्षीयामुकतिथौ वासरे स्वस्य ( यजमानस्यवा ) शरीरेउत्पत्स्यमानाखिलारिष्ट ( वाअमुक व्याधि ) निवृत्तये श्रीमहामृत्युञ्जय प्रसादसिद्धि द्वारा सर्वोपशान्ति पूर्वक झटिति दीर्घायुष्य सतत आरोग्यताप्राप्त्यर्थं । महामृत्युञ्जय मंत्रस्य सहस्र (शत) संख्याकं जपमहं करिष्ये॥ ॐ अस्य श्री महामृत्युञ्जय मंत्रस्य वामदेवकहोल वसिष्ठा

ऋषयः पंक्तिगायत्री अनुष्टुप्छन्दांसि सदाशिव महामृत्युञ्जयरुद्र देवता ह्रीं शक्तिः श्रीं बीजं ममाभीष्टसिद्धये जपेविनियोगः ॥ अथ ऋष्यादि न्यासः ॥ ॐ वामदेवकहोल वसिष्ठऋषिभ्यो नमः शिरसि ॥ ॐ पंक्ति गायत्री अनुष्टुप्छन्दोभ्यो नमः मुखे ॥ ॐ सदाशिव महामृत्युञ्जय रुद्रदेवतायै नमः हृदि ॥ ॐ ह्रीं शक्तये नमः लिंगे ॥ ॐ श्रीं बीजाय नमः पादयोः ॥ मूलेन करौ प्रमृज्य ॥ ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः त्र्यम्बकं ॐ नमो भगवते रुद्राय शूलपाणये स्वाहा अंगुष्ठाभ्यां नमः (हृदयाय नमः) ॥ ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः यजामहे ॐ नमो भगवते रुद्राय अमृत मूर्तये मांजीवय तर्जनीभ्यां नमः (शिरसे स्वाहा) ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः सुगन्धि पुष्टि वर्द्धनं ॐ नमो भगवते चन्द्र शिरसे जटिने स्वाहा मध्यमाभ्यां नमः (शिखायैवषट्) ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः उर्वारुकमिव बन्धनात् ॐ नमोभगवते रुद्राय त्रिपुरान्तकाय ह्रीं ह्रीं अनामिकाभ्यां नमः (कवचायहुम्) ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः मृत्योर्मुक्षीय ॐ नमो भगवते रुद्राय त्रिलोचनाय ऋग्यजुः साम मंत्र त्रयाय कनिष्ठकाभ्यां नमः (नेत्रत्रयाय वौषट्) ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः मामृतात् ॐ नमो भगवते रुद्राय अग्नित्रयाय ज्वल २ मां रक्षस्व अघोरास्त्रायफट् करतल कर पृष्ठाभ्यां नमः

( अस्त्रायफट् ) इति षडंगन्यासः ॥

अथाक्षर न्यासः ॥ ॐ ६१ ॐ त्र्यं नमः पूर्वमुखे॥ ॐ ६ ॐ चं नमः पश्चिममुखे ॥ ॐ ६ ॐ कं नमः याम्यमुखे ॥ ॐ ६ ॐ यं नमः उत्तरमुखे ॥ ॐ ६ ॐ जां नमः उरसि ॥ ॐ६ ॐ मं नमः कण्ठे ॥ ॐ६ ॐ हें नमः मुखे ॥ ॐ६ ॐ सु नमः नाभौ ॥ ॐ६ ॐ गं नमः हृदि ॥ ॐ६ ॐ धिं नमः पृष्ठे ॥ ॐ ६ ॐ पु नमः कुक्षौ ॥ ॐ ६ ॐ ष्टि नमः लिंगे ॐ६ ॐ वं नमः गुदे ॥ ॐ ६ ॐ र्द्धं नमः द० ऊरु मूले ॥ ॐ ६ ॐ नं नमः वाम ऊरु मूले॥ ॐ ६ ॐ उं नमः दक्षिण ऊरु मध्ये ॥ ॐ ६ ॐ र्वां नमः वाम ऊरु मध्ये ॥ ॐ ६ ॐ रुं नम: दक्षिण जानौ ॥ ॥ ॐ ६ ॐ कं नम: वाम जानौ॥ ॐ ६ ॐ मिं नमः द० जानु वृत्तौ॥ ॐ ६ ॐ वं नम वाम जानु वृत्तौ ॥ ॐ ६ वं नमः दक्षिणस्तने ॥ ॐ ६ ॐ धं नम वामस्तने ॥ ॐ ६ ॐ नां नमः दक्षिण पार्श्वे॥ ॐ ६ ॐ मृ नमः वाम पार्श्वे॥ ॐ ६ ॐ त्यों नम: दक्षिण पादे ॥ ॐ ६ ॐ मु नम वाम पादे ॥ ॐ ६ ॐ क्षीं नम: दक्षिण करे ॥ ॐ ६ ॐ यं नमः वाम करे ॥ ॐ ६ ॐ मां नमः दक्षिण नासायां ॥ ॐ ६ ॐ मृ नमः वाम नासायां ॥ ॐ ६ ॐ तान् नमः मूर्द्धिन ॥

---

टिप्पणी १ ६ ॐ ह्रौं ॐ जूं सः भूर्भुवः स्वः एवं सर्वत्र ॥

अथ पदन्यासः ॥ ॐ त्र्यम्बकं नमः शिरसि ॐ यजा महे नमो भ्रुवोः ॥ ॐ सुगन्धि नमः नेत्रयोः। ॐ पुष्टि वर्द्धनं नमः मुखे ॥ ॐ उर्वारुकं नमः गण्डस्थले। ॐ इव नमः हृदये। ॐ बन्धनान्नमो उदरे। ॐ मृत्योः नमःलिंगे॥ ॐ मुक्षीय नमः ऊर्वोः। ॐ मां नमः जान्वोः ॥ ॐ अमृता नमः पादयोः। मूलेन व्यापकं कुर्यात् ॥ मानसोपचारैः सम्पूज्य ॥ यथा ॥ ॐ लं पृथिव्यात्मकं गन्धं विलेपयामि नमःकनिष्ठांगुष्ठाभ्यां। ॐ हं आकाशात्मकं पुष्पाणि समर्पयामि नमः अंगुष्ठानामिकाभ्यां ॥ ॐ यं वाय्वात्मकं धूपमाघ्रापयामि नमः मध्यमांगुष्ठाभ्यां ॥ ॐ रं वह्न्यात्मकं दीपं दर्शयामि नमःअंगुष्ठतर्जनीभ्यां। ॐ वं अमृतात्मकं नैवेद्यंनिवेदयामि नमः अंगुष्ठानामिकाभ्यां ॥ ॐ सं सोमात्मकं ताम्बूल छत्र चामरादीनिमंत्र पुष्पांजलिं समर्पयामि नमः सर्वांगुलीभिः ॥

ध्यानम् ॥ ॐ हस्ताम्भोज युगस्थ कुम्भयुगलादुद्धृत्य तोयं शिरःसिञ्चन्तं करयोर्युगेनदधतं स्वाङ्के स कुम्भौ करौ अक्षस्रङ् मृगहस्तमम्बुजगतमूर्द्धस्थचन्द्रस्रवत्पीयूषोन्न तनुं भजे स गिरिजं मृत्युञ्जयं शङ्करम् ॥१॥ ॐ चन्द्रोद्भासित मूर्द्धजं सुरपतिं पीयूषपात्रं वहद्धस्ताब्जेनदधत् सुदिव्यममलं हास्यास्य पङ्केरुहम्। सूर्येन्द्वग्नि विलोचनं करतलैः पाशाक्ष सूत्राङ्कुशांभोजं बिभ्रतमक्षयं पशुपतिं मृत्युञ्जयं संस्मरे ॥

इति ध्यात्वा पञ्च मुद्राः प्रदर्शयेत् ॥
मुष्टि सारंग शक्त्याख्या लिंग पंचमुखाभिधाः ।
मुद्राः प्रदर्श्य प्रजपेल्लक्षं तस्य दशांशतः ॥
दश द्रव्यैः प्रजुहुयात्तानि बिल्वफलं तिलाः ।
पायसं सर्षपादुग्ध दधि दूर्वा च सप्तमी ।
वटोत्पलाशात्खदिरात्तसमिधो मधुराप्लुताः ॥

मुष्टिमुद्रा ॥

मुष्टिं दक्षिण हस्तेन विधायोर्द्ध्वं समुन्नयेत् ।
मुद्रामुष्टयाभिधाख्याता सर्वविघ्नविनाशिनी ॥१॥

भाषा–दक्षिण हाथ की मुट्ठी बांध कर ऊँची करने को मुष्टि मुद्रा कहते हैं।

सारंग (मृग) मुद्रा ॥

दक्षस्यानामिकांगुष्ठ मध्यमाग्राणि योजयेत् ।
शिष्टेउच्छ्रिते कुर्यान्मृग मुद्रेयमीरिता ॥ २ ॥

भाषा—दक्षिण हाथ की मध्यमा, अनामिका अर्थात् बीचकी दो उंगलियों को अंगूठेके अग्र भागसे मिलाना तथा इधर उधर की दो उंगलियां सीधा करने को मृग मुद्रा कहते हैं।

शक्ति मुद्रा ॥

मुष्टीकरौ विधायद्वौ वामस्योपरि दक्षिणम् ।
कृत्वा शिरसियुञ्जीत शक्ति मुद्रेयमीरिता ॥३॥

भाषा-दोनों हाथ की मुट्ठी बना बाईं मुट्ठी पर दहिनी धरकर सिर पर रखने को शक्ति मुद्रा कहते हैं।

लिंग मुद्रा ॥

उच्छ्रितं दक्षिणांगुष्ठं वामांगुष्ठेन बन्धयेत्।
वामांगुली दक्षिणाभिरंगुलीभिश्च बन्धयेत् ॥
लिंगमुद्रेयमाख्याता शिव सान्निध्यकारिणी ॥४॥

भाषा-दक्षिण हाथ के अंगूठेको वाम हाथके अंगूठेसे बांधना बाकी वामअंगुलियां दक्षांगुलियोंसे बांधने को लिंग मुद्रा कहते हैं।

पञ्चमुख मुद्रा ॥

मणिवंध करौ युक्तावंगुल्यग्राणि मेलयेत्।
मुद्रा पञ्चमुखाख्येयं दर्शिता शिवतोषिणी ॥५॥

भाषा-दोनों हाथ की पांचों उंगलियों के अगले पोरुओं को मिलानेसे पंचमुख मुद्रा होती है। इससे महादेवजी प्रसन्न होतेहैं।

जपमाला मूलेन संप्रोक्ष्य ॥

ॐ मां माले महामाये सर्वशक्ति स्वरूपिणी ॥ चतुर्वर्ग-स्त्वयिन्यस्तस्तमान्मेसिद्धिदाभव ॥ ह्रीं सिद्ध्यै नमः ॥ इति मालां सम्पूज्य ॥ ओं अविघ्नं कुरुमालेत्वं जपकाले सदामम। त्वंबीजः सर्वमन्त्राणां त्वंशक्तिः सिद्धि दायिनी। त्वयि स्पर्श वशादेवि सिद्धिरिष्ठा करेमम ॥ इति प्रार्थ्य ॥ प्रणवो मातृकादेवी हल्लेखेत्यमृतत्र यम् ॥ अमृतत्रय संयो-

गाद्भ्रष्ट मंत्रोऽपि जीवति ॥ शापोद्धार, सजीवन, उत्कीलन, निर्मलीकरण इत्यादि संस्कारान् (गुरुमुखादवगंतव्यः) कृत्वा स्व शिरसिगुरुं कण्ठेपीतवर्णं मूलं हृदि महामृत्युञ्जय देवतां गुरुपादयोरात्मानं आज्ञाचक्रेण त्रयाणामैक्य विभाव्य पुनर्हृदि देवं ध्यायन् यथासंख्यं सहस्रं, १००० शतं १०० वा जपं कुर्यात् ॥ ॐ ह्रौं ॐ जूंसः भूर्भुवः स्वः त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात् भूर्भुवः स्व रों जूंसः ह्रौं ॐ ॥ यथा संख्यंजप्त्वा पुनः मालां ह्रों सिद्धयै नमः इति सम्पूज्य ॥

ॐ त्वं माले सर्वदेवानां प्रीतिदा शुभदाभव ।
शिवं कुरुष्व मे भद्रे यशोवीर्यं च सर्वदा ॥

इति मालां शिरसिसंस्थाप्य पुनःजपान्ते जाग्रदवस्था, दीपन अवस्था शापोद्धारादिकम् कृत्वा पुनः प्राणायामादि न्यासान्विधाय ।

ॐ गुह्यातिगुह्य गोप्तात्वं गृहाणास्मत्कृतंजपम् ।
सिद्धिर्भवतुमे देव ! त्वत्प्रसादान्महेश्वर !

इति विशेषार्घ्यं जलेन जपंदेव दक्षहस्ते समर्प्य मालाँ रहसि (जपस्थन्यां) स्थापयेत् । ततः प्रदक्षिणा नमस्कारैर्देवं संतोष्य स्तोत्रादिकं मृत्युञ्जयाष्टकं मृत्युञ्जय कवचादिकं च पठेत् ॥

## महामृत्युञ्जयाष्टकम् ॥

ॐ मृत्युञ्जय ! परेशान ! जगदामय नाशन ! ।
तव ध्यानेन देवेश ! मृत्युम्प्राप्तोपिजीवति ॥ १ ॥
पञ्चास्यदोर्दण्ड दशांप्रितेत्र दिनेशभालेन्दु युतंगणेशैः ।
वामाग्रसंस्था गिरिजासमेतं वन्दे महामृत्यु विनाशरूपम्॥२
देवं मृत्यु विनाशनं भयहरं साम्राज्य मुक्तिप्रदम् ।
नानाभूतगणान्वितं दिवि पदैर्देवैः सदा सेवितं ॥ ३ ॥
अज्ञानान्धक नाशनं शुभकरं विद्यासुसौख्य प्रदम् ।
सर्वसर्वपतिं मृडेश्वर ! हरं मृत्युंजयं भावये ॥ ४ ॥
वन्दे ईशान देवाय नमस्तस्मै पिनाकिने ।
आदि मध्यान्त रूपाय मृत्युनाशं करो तु मे ॥ ५ ॥
नमस्तस्मै भगवते कैलासाचल वासिने ।
नमो ब्रह्मेन्द्र रूपाय मृत्युञ्जय ! प्रसीदमे ॥ ६ ॥
नमो निष्पर्क रूपाय नमो ज्ञान स्वरूपिणे ।
मृत्युनाशयत्वामाशु मृत्युञ्जय ! प्रसीदमे ॥
त्र्यम्बकाय नमस्तुभ्यं पंचास्याय नमोनमः ।
दोर्दण्डचापाय नमो मम मृत्युं विनाशय ॥ ७ ॥
नमो अर्द्धेन्दु रूपाय नमो दिग्वसनाय च ।
नमो भक्तार्तिहन्त्रे च मम मृत्युम्विनाशय ॥ ८ ॥

मृत्युञ्जयाष्टकं दिव्यं त्रिकाले यः पठेन्नरः ।
तस्यापमृत्युर्नश्यन्ति सत्यं सत्यं शिवाज्ञया ॥ ९ ॥
अर्द्ध रात्रेजपेन्नित्यं चतुराशीति संख्यया ।
काले मृत्युर्विनश्येत अकालाल्पस्यका कथा ॥ १० ॥
आलस्येनाप्रसंगेन श्रद्धाहीनेन चेतसा ।
पठेद्यघ्य कालेषु ध्रुवंमृत्यु निवारयेत् ॥ ११ ॥

इति मृत्यु जयाष्टकम् ॥

## महामृत्युञ्जय स्तोत्र ॥

ॐ नमो मृत्युञ्जयाय ॥ नन्दिकेश्वर उवाच ॥ कैलासस्योत्तरे शृङ्गे शुद्धस्फटिकसन्निभे । तमोगुणविहीने तु जरामृत्यु विवर्जिते ॥ १ ॥ सर्वतीर्थास्पदाधारे सर्व ज्ञान कृतालये । कृताञ्जलिपुटोब्रह्मा ध्यानशीलः सदाशिवम् ॥२॥ पप्रच्छ प्रणतोभूत्वा जानुभ्यामवनिंगतः । सर्वार्थ सम्पदा-धारं ब्रह्मालोकपितामहः ॥ ३ ॥ ब्रह्मोवाच ॥ केनोपायेन देवेश ! चिरायुर्लोमशोऽभवत् । तन्मेब्रूहि महेशान ! लोकानां हितकाम्यया । ४॥ श्रीसदाशिव उवाच ॥ शृणुब्रह्मन् प्रवक्ष्यामि चिरायुर्मु निसत्तम ! । संजातः कर्मणा येन व्याधिमृत्यु विवर्जितः ॥ ५ ॥ तस्मिन्नेकार्णवे घोरे सलिलौघ परिप्लुते । कृतांत मथनाशाय स्तुतोमृत्युञ्जयः शिवः ॥ ६ ॥

तस्य संकीर्तनान्नित्यं मुनिर्मृत्युविवर्जितः । तमेव कीर्तयन् प्रसन्नमृत्युं जेतुं न संशयः ॥७॥ लोमश उवाच ॥ देवाधिदेव ! देवेश ! सर्वप्राण भृतांवर ! । प्राणिनामपि नाथस्त्वं मृत्युञ्जय नमोस्तुते ॥ ८ ॥ देहिनां जीवभूतोऽसि जीवोजीवस्य कारणम् । जगतां रक्षकस्त्वंवै मृत्युञ्जय ! नमोस्तुते॥९॥ हिमाद्रिशिखराकार सुधावीचि मनोहर ! । पुण्डरीक ! परंज्योतिर्मृत्युञ्जय ! नमोस्तुते ॥ १० ॥ ध्यानाधार ! महाज्ञान ! सर्वज्ञानैक कारण ! ॥ परित्रातासि लोकानां मृत्युंजय ! नमोस्तुते ॥ ११ ॥ निहतायेन कालेन स देवासुर मानवाः । गन्धर्वाप्सरसश्चैव सिद्धविद्याधरास्तथा ॥ १२ ॥ साध्याश्च वसवोरुद्रास्तथाश्विनिसुतावुभौ । मरुतश्च दिशो नागाः स्थावराजङ्गमास्तथा ॥ १३ ॥ जिता सोपित्वयाध्यानान्मृत्युञ्जय ! नमोस्तुते ॥१४॥ ये ध्यायन्तिपरांमूर्तिं पूजयन्त्यमराधिप ! । न ते मृत्युवशायान्ति मृत्युञ्जय ! नमोस्तुते ॥१५॥ त्वमोंकारोऽसि वेदानां देवानां च सदाशिवः । आधारशक्तिः शक्तीनां मृत्युञ्जय ! नमोस्तुते ॥१६॥ स्थावरे जङ्गमेवापि यावत्तिष्ठति मेदिनी । जीवत्वित्याहलोकोऽयं मृत्युञ्जय ! नमोस्तुते ॥१७॥ सोमसूर्याग्नि मध्यस्थ व्योमव्यापिन्सदा शिव ! । कालत्रय ! महाकाल ! मृत्युञ्जय ! नमोस्तुते ॥ १८ ॥ प्रबुद्धे चाप्रबुद्धे च त्वमेवसृजसे जगत् ।

सृष्टिरूपेण देवेश ! मृत्युञ्जय ! नमोस्तुते ॥१६॥ व्योम्नित्वं व्योमरूपोसि तेजस्सर्वत्र तेजसि । प्राणिनां ज्ञानरूपोसि मृत्युञ्जय ! नमोस्तुते ॥ २० ॥ जगज्जीवो जगत्प्राणः स्रष्टा त्वं जगतः प्रभुः ॥ कारणं सर्वतीर्थानां मृत्युञ्जय नमोस्तुते ॥२१॥ नेता त्वमिंद्रियाणां च सर्वज्ञान प्रबोधक ! । सांख्य योगश्च हंसश्च मृत्युञ्जय ! नमोस्तुते ॥ २२ ॥ रूपातीतः सुरूपश्च पिण्डश्च पदमेव च । चतुर्युग कलाधार ! मृत्युञ्जय ! नमोस्तुते ॥ २३ ॥ रेचके वन्हिरूपोसि सोमरूपोसि पूरके । कुम्भके शिवरूपोसि मृत्युञ्जय ! नमोस्तुते ॥२४॥ क्षयं करोषि पापानां पुण्यानामपि वर्द्धनम् । हेतुस्त्वं श्रेयसान्नित्यं मृत्युञ्जय ! नमोस्तुते ॥ २५ ॥ सर्वमाया कलातीत ! सर्वेन्द्रिय परावर ! सर्वेन्द्रिय कलाधीश ! मृत्युञ्जय ! नमोस्तुते ॥२६॥ रूपगन्धोरसः स्पर्शः शब्द संस्कार एवच ॥ त्वत्तःप्रकाश एतेषां मृत्युञ्जय ! नमोस्तुते ॥ २७ ॥ चतुर्विधानां सृष्टीनां हेतुस्त्वं कारणेश्वर ! । भावाभाव परिच्छिन्न मृत्युञ्जय नमोस्तुते ॥ २८ ॥ त्वमेकोनिष्कलो लोके सकलं भुवनत्रयम् । अतिसूक्ष्मातिरूपस्त्वं मृत्युञ्जय ! नमोस्तुते ॥२९॥ त्वं प्रबोध स्त्वमाधारस्त्वद्बीज भुवनत्रयम् । सत्वंरजस्तमस्त्वंहि मृत्युञ्जय ! नमोस्तुते ॥ ३० ॥ त्वं सोमस्त्वं दिनेशश्च त्वमात्मा प्रकृतेःपरः ॥ अष्टत्रिंशत्कलानाथ ! मृत्युञ्जय ! नमोस्तुते॥३१॥

सर्वेन्द्रियाणामाधारः सर्वभूत गुणाशयः। सर्व ज्ञानमयानन्त मृत्युञ्जय ! नमोस्तुते ॥३२॥ त्वमात्मासर्वभूतानां गुणानां त्वमधीश्वरः। सर्वानन्दमयाधार ! मृत्युञ्जय ! नमोस्तुते ॥३३॥ त्वं यज्ञः सर्वयज्ञानां त्वं बुद्धिर्बोध लक्षणा ॥ शब्द ब्रह्म त्वमोंकारोमृत्युञ्जय ! नमोस्तुते ॥३४॥ श्रीसदाशिव उवाच ॥ एवं संकीर्तयेद्यस्तु शुचिस्तद्गत मानसः ॥ भक्त्या शृणोति यो ब्रह्मनसमृत्युवशो भवेत् ॥ ३५ ॥ न तु मृत्युभयं तस्य प्राप्तकालं च लंघयेत् । अपमृत्युभयं तस्य प्रणश्यति न संशयः ॥ ३६ ॥ व्याधयो नोपद्यन्ते नोपसर्गभयं क्वचित् । प्रत्यासन्नान्तरेकाले शतैकावर्तने कृते ॥ ३७ ॥ मत्युर्नजायते तस्य रोगान्मुंचति निश्चितम् । पञ्चम्यां वा दशम्यां वा पौर्णमास्यामथापिवा ॥ ३८ ॥ शतमावर्तयेद्यस्तु शतवर्षंसजीवति । तेजस्वी बलसम्पन्नो लभतेश्रियमुत्तमाम् ॥३६॥ त्रिविधं नाशयेत्पापं मनोवाकाय सम्भवम् । अभिचाराणि सर्वाणि कर्माण्याथर्वणानि च ॥४०॥ चीयन्ते नात्रसंदेहो दुःस्वप्नं च विनश्यति । इदं रहस्यं परमं देवदेवस्य शूलिनः ॥४१॥ दुःख प्रणाशनंपुण्यं सर्वविघ्न विनाशनम् ॥ ४२ ॥

इति श्री शिवब्रह्म सम्वादे श्रीमृत्युञ्जय स्तोत्रं सम्पूर्णम् ॥

## श्रीमहामृत्युञ्जय कवचम् ॥

श्रीभैरव उवाच ॥ शृणुष्व परमेशानि कवचं मन्मुखोदितम् । महामृत्युञ्जयस्यास्य न देयं परमाद्भुतम् ॥१॥ यं धृत्वा च पठित्वा च यं श्रुत्वा कवचोत्तमम् । त्रैलोक्याधिपतिर्भूत्वा सुखितोस्मि महेश्वरि ॥ २ ॥ तदेववर्णयिष्यामि तवप्रीत्यावरानने । तथापि परमतत्त्वं न दातव्यं दुरात्मने ॥ ३ ॥ ॐ अस्य श्रीमहामृत्युञ्जय कवचस्य श्रीभैरव ऋषिर्गायत्रीछन्दः श्रीमृत्युञ्जय रुद्रोदेवता ॐबीजं जूंशक्तिः सः कीलकं हौमितितत्त्वं शरीरारोग्यार्थे पाठे विनियोगः ॥ अथ ऋष्यादि न्यासः ॥ ॐ भैरवऋषये नमः शिरसि । ॐ गायत्रीछन्दसे नमो मुखे ॥ ॐ श्रीमृत्युञ्जय रुद्र देवतायै नमो हृदि । ॐ बीजाय नमो लिंगे ॥ ॐ जूं शक्तयेनमः पादयोः ॥ ॐ सः कीलकाय नमः सर्वांगे । ॐ हौं तत्वाय नमो हृदि ॥ ध्यानम् ॥ हस्ताभ्यां कलशद्वयामृतरसैराप्लावयन्तंशिरो । द्वाभ्यां तौ दधतंमृगाक्षवलये द्वाभ्यां वहंतंपरम् ॥ अङ्कन्यस्त करद्वयामृतघटं कैलासकान्तं शिवम् । स्वच्छाम्भोजगतं नवेन्दुमुकुटं देवं त्रिनेत्रं भजे ॥१॥ चन्द्रार्काग्नि विलोचनं स्मितमुखं पद्मद्वयान्तः स्थितम् । मुद्रापाश मृगाक्षसूत्र विलसत्पाणिं हिमांशुप्रभम् ॥ कोटीरेन्दुगलत्सुधाप्लुत तनुं हारादिभूषोज्ज्वलम् । कान्त्याविश्वविमोहनं पशुपतिंमृत्युञ्जयं भावये ॥२॥

चन्द्रमण्डल मध्यस्ते रुद्रमाल्ये विचित्रिते। तत्रस्थं चिन्त-येत्साध्यं मृत्युं प्राप्तोपिजीवति ॥१॥ ॐ जूं सः हौं शिरः पातु देवो मृत्युञ्जयोमम। श्रीशिवो वै ललाटं च ॐ हौं भ्रुवौ सदाशिवः॥ २॥ नीलकण्ठोऽवतान्नेत्रे कपर्दीमेऽवताच्छ्रुती। त्रिलोचनोऽवताद्गण्डौ नसोर्मे त्रिपुरान्तकः॥ ३॥ मुखेपीयूष घटभृदोष्ठौ मे कृत्तिकाम्बरः। हनुं मे हाटकेशानो मुखंबटुक भैरवः ॥४॥ कंधरांकाल मथनो गलं गण प्रियोवतु॥ स्कंधौ स्कन्द पितापातु हस्तौ मे गिरिशोवतु ॥ ५॥ नखान्मे गिरिजानाथः पायादंगुलि संयुतः। स्तनौ तारापतिपातु वक्षः पशुपतिर्मम ॥ ६॥ कुक्षिं कुबेर वरदः पार्श्वौ मे मार शासनः। शर्वःपातु तथानाभिं शूलीपृष्ठं ममावतु॥७॥ शिश्नं मे शंकरः पातु गुह्यंगुह्यकवल्लभः। कटिं कालान्तकः पायादूरू मेंधकघातकः॥ ८॥ जागरूको वताज्जानू जंघे मे काल भैरवः। गुल्फौ पायाज्जटाधारी पादौ मृत्युञ्जयोवतु ॥ ९॥ पादादि मूर्द्ध पर्यन्तं सद्योजातो ममावतु। रक्षाहीनं नामहीनं वपुः पात्वमृतेश्वरः॥ १०॥ पूर्वे बलविकरणो दक्षिणेकाल शासनः। पश्चिमे पार्वतीनाथ उत्तरे मां मनोन्मनः॥ ११॥ ऐशान्यामीश्वरः पायादाग्नेयामग्निलोचनः। नैरृत्यांशम्भु-रव्यान्मां वायव्यां वायुवाहनः॥ १२॥ ऊर्ध्वे बलप्रमथनः पाताले परमेश्वरः। दशदिक्षु सदापातु महामृत्युञ्जयश्च

माम् ॥१३॥ रणे राजकुलेद्यूते विषमे प्राणसंशये। पायाद्वों जूं महारुद्रो देवदेवो दशाक्षरः ॥१४॥ प्रभाते पातुमां ब्रह्मा मध्यान्हे भैरवोवतु। सायं सर्वेश्वरः पातु निशायां नित्य चेतनः ॥ १५ ॥ अर्द्ध रात्रे महादेवो निशान्ते मां महोदयः। सर्व दासर्व तः पातु ॐ जूं सः ह्रौं मृत्युञ्जयः ॥ १६ ॥ इतीदं कवचं पुण्यं त्रिपुलोकेषु दुर्लभं। सर्व मंत्र मयंगुह्यं सर्व तन्त्रेषु गोपितम् ॥ १७ ॥ पुण्यं पुण्यप्रदंदिव्यं देवदेवाधि दैवतम्। य इदं च पठेन्मंत्रंकवचं वाचयेत्ततः ॥१८॥ तस्य हस्ते महादेवित्र्यम्बकस्याष्टसिद्धयः। रणेधृत्वा चरेयुद्धं हत्वा शत्रूञ्जयं लभेत् ॥ १९ ॥ जपंकृत्वा गृहेदेवि स प्राप्स्यति सुखं पुनः। महाभये महारोगे महामारीभये तथा ॥ २० ॥ दुर्भिक्षे शत्रुसंहारे पठेत् कवचमादरात्। सर्व तत्प्रशमं याति मृत्युञ्जय-प्रसादतः ॥ २१ ॥ धनंपुत्रान्सुखंलक्ष्मीमारोग्यं सर्व सम्पदः। प्राप्नोति साधकःसद्योदेविसत्यं न संशयः ॥२२॥ इतीदं कवचं पुण्यं महामृत्युञ्जयस्यतु। गोप्यंसिद्धिप्रदं गुह्यं गोपनीयं स्वयोनिवत् ॥ २३ ॥

इतिश्री महामृत्युञ्जय कवचम् ॥

## ॥ प्रार्थना ॥

ॐ नमोंकार स्वरूपाय वेदरूपाय ते नमः।
अलिंग लिंगरूपाय विश्वरूपाय ते नमः ॥१॥

नमो मोक्ष प्रदेतुभ्यं नमो नादात्मने तथा।
नमः शब्दस्वरूपाय रूपातीताय ते नमः ।२।

त्वं माता सर्वलोकानां त्वमेव जगतः पिता।
त्वं भ्राता त्वं सुहृन्मित्र त्वं प्रियः प्रियरूपधृक् ॥३॥

त्वं गुरुस्त्वं गतिः साक्षात्त्व' पिता त्वं पितामह' ।
नमस्ते भगवन्नुरुद्रभास्करामित तेजसे ॥ ४ ॥

संसार सागरे मग्न मामुद्धर शिवाव्यय।
अनेन पूजनेन त्वं वांछितार्थं प्रदोभव ॥ ५ ॥

अंगहीनं क्रियाहीनं विधिहीनं महेश्वर ! ।
पूजितं यन्मया देव ! तत्क्षमस्वाम्बिकापते ॥६॥

अन्यथा सक्त चित्तेनक्रियाहीनेन वा विभो।
भक्ति श्रद्धाविहीनेन मंत्रतंत्र बिना प्रभो ॥ ७ ॥

मनोवाकाय दुष्टेन पूजितं परमेश्वर ! ।
तत्सर्वंक्षम्यतां देव ! दासे कृत्वा दयांमयि ॥८॥

ज्ञानप्रदाय कलिकल्मष नाशनाय ।
भक्त प्रियाय शशि शोभित शेखराय ॥६॥

गंगाधराय गिरिजापतये नमोद्य ।
भक्तिर्दृढा भवतु मे त्वयि भो महेश ॥ १० ॥

हे चन्द्रचूड़ ! जगदीश्वर ! मन्मथारे !
गौरीपते ! शिव ! शरण्य ! पिनाकपाणे ॥

ज्योतिःस्वरूप ! वृषभध्वज ! पञ्चवक्त्र !
न त्वामृते जगति कः सुखदोस्ति स्वामिन् ॥११॥
प्रणतमनुज कष्टघ्नाय गंगाधराय ।
त्रिभुवन जनकाय त्र्यम्बकायाक्षराय ॥
मनसिज दहनायाभीष्टदाय्रे शिवाय ।
त्वयि भवतु दृढा मे ते नमोस्त्वीश ! भक्तिः ॥१२॥
त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेवसर्वं मम देवदेव ॥१३॥
शिवे भक्तिः शिवे भक्तिः शिवे भक्तिर्भवेभवे ।
अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥१४॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं महेश्वर ! ।
यत्पूजितं मया ! देव परिपूर्णं तदस्तु मे ॥१५॥
रूपंदेहि जयदेहि भर्गं भगवन्देहि मे ।
भुक्ति मुक्ति फलं देहि गृहाणार्चा त्वयाधुना ॥१६॥
अज्ञानाद्यदि वा ज्ञानाज्जप पूजादिकंमया ।
कृतं तदस्तु सफलं कृपया तवशंकर ॥ १७ ॥
तावकस्त्वद्गतप्राणस्त्वचितो हं सदा मृड ! ।
पुष्पाञ्जलिं समर्प्यैव क्षमाप्य विधिपूर्वकम् ॥
पूजा काले पुनर्देव ! त्वयागन्तव्यमेव हि ।
मृत्युञ्जयस्य (-पार्थिवस्य च-) लिंगस्य

न्मयापूजनं कृतम् ।
तेनमे भगवान्रुद्रो वांच्छितार्थं प्रयच्छतु ॥१८॥
इति पुनः पुनः प्रणम्य ॐ श्रीसांब सदाशिवार्पणमस्तु ॥

भूमौ स्खलितपादानां भूमिरेवावलम्बनं ।
त्वयिजातापराधानां त्वमेवशरणं शिव ! ॥
अपराधो भवत्येव सेवकस्य पदेपदे ।
कोऽपरः सहतां लोके केवलं स्वामिनं विना ॥
क्षमस्व देव ! देवेश ! क्षमस्व जगदीश्वर ! ।
तवचरणाम्बुजे नित्य निश्चला भक्तिरस्तु मे ॥

इति क्षमाप्य ळिंगमुद्रया प्रणमेत् ॥

ॐ इतः पूर्वं बुद्धिदेह धर्माधिकारतो जाग्रत्स्वप्न सुषु-प्त्यवस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतंयदुक्तं यत्कृतं तत्सर्वं श्रीगुरुदेव समर्पितमस्तु स्वाहा ॥ अर्घ्योदकेन इत्यात्मार्पणं कृत्वा मां मदीयञ्च सकलं श्रीसांब सदाशिवचरणयोः समर्पितमस्तु ॥ तत अर्घ्यपात्र १ मुत्थाप्य देवोपरित्रिर्भ्रामय। ॐ साधु वा साधु वा कर्म यद्यदा चरितं

१-मंत्र तंत्र प्रकाशे। पूजयेद्गन्ध पुष्पाद्यैः शंखं वै देववद्बुधः ॥ अन्यत्रापि ॥ त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया। शंखे-तिष्ठन्ति विप्रेन्द्र तस्माच्छंखं सदार्चयेत् ॥

मया ॥ तत्सर्वं कृपया देव ! गृहाणाराधनंमम । इति तृतीय भागं दक्षहस्ते समर्प्यपात्रं स्थाप्य गुर्वात्मने पराङ्मुखं शेषं विभजेत् ॥ ततोपुष्पांजलिमादाय ॥ ओं रश्मिरूप महेशान ! अत्रपूजित देवता । श्रीशिवाङ्गे लीनास्तु सन्तु सर्व शुभावह ॥ इति पुष्पाञ्जलिं दत्वा आवरण देवता. शिवाङ्गे लीनं विभाव्य तालत्रयेण प्रबोध्य । ओं नमो महादेवाय ॥ इति मूलेनसंहार मुद्रया विसृज्य गणेश कुमारौ तत्तन्मन्त्रेण विसृज्य ॥ ओं गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वर ! । देहि मे वाञ्छितार्थञ्च पुनरागमनाय च ॥ गच्छ त्वं परमं रम्यं स्वस्थानं परमेश्वर । यत्र ब्रह्मादयो देवा नविदुः परमं पदम् ॥ इति निर्माल्यपुष्पद्वारा हृदि मन्त्रेण श्रीसांबशिवं हृद्यानीय मनसा सम्पूज्य षडंगं विधाय ॥

आत्मानं शिवरूपं ध्यात्वा ईशाने त्रिकोणवृत्त चतुरस्रं विधाय । ॐ चण्डेश्वराय नमः ॥ इति सम्पूज्य । ओं लेह्य चोष्यपानानि ताम्बूलं स्रग्विलेपनं । निर्माल्य भोजने तुभ्यं ददामि श्री शिवाज्ञया ॥ इति नैवेद्यांशं किंचिन्निक्षिप्य ऊर्ध्वं फट् तन्मंत्रं किंचित् जप्त्वा स्वयं निर्माल्य शिवोपरतः बिल्वं उद्धृत्य स्वशिखायां धारयेत् । ततः ॥ ह्रीं हंसः श्रीसूर्य इदमर्घ्यं स्वाहा ॥ इत्यर्घ्यं दत्वा ॥ यच्छिद्रं तपःछिद्रं यच्छिद्रं पूजने मम । तत्सर्वमच्छिद्रमस्तु भास्करस्य

प्रसादतः ॥ इति छिद्रमवधार्य ॥ गुरुंच त्रिधाप्रणम्य ॥

अकाल मृत्यु हरणं ब्रह्महत्या विनाशनम् ।
व्याधिघ्नं पुण्यमाश्येऽहं शिव निर्माल्यजनोदकम् ॥
इति मंत्रेण शिवचरणामृतं पिबेत् ॥

बाण रावण चंडीश नन्दी भृंगीरिटादयः । सदाशिवप्रसादंते सर्वेगृह्णन्तुशाम्भवाः ॥ प्रसादं स्वीकृत्य यथासुखं विहरेत् ।

शिव पूजनकाले नारदोक्तम् ॥

असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतांसंगो गंगाम्भः शम्भु सेवनम् ॥

अग्नि पुराणे ॥

विना भस्म त्रिपुण्ड्रेण विना रुद्राक्षमालया ।
विना मालूरपत्रेण शिवपूजा वृथा भवेत् ॥
पूजितोऽपि महारुद्रो नस्यात्तस्य फलप्रदः ।

लिंग पुराणे ॥

एकंपाशुपतं लिंगंमृच्छिलादि विनिर्मितम् ॥
शालग्राम शिलामेकां गृहस्थश्चैव पूजयेत् ॥
स्कान्दे-अग्निहोत्रं त्रिवेदाश्च यज्ञाश्च बहुदक्षिणाः ।
शिवलिंगार्चनस्यैते कोट्यंशेनापि नो समाः ।
छित्वाभित्वा च भूतानि हत्वा सर्वमिदं जगत् ॥

यजेद्देवं विरूपाक्षं न स पापेन लिप्यते।
अनेक जन्म साहस्रं भ्राम्यमाणस्तु योनिषु ॥
कः समाप्नोति वै मुक्त लिंगार्चनमृते नरः।
प्रातरुत्थाय योलिंगं भक्त्या संपूजयेत्सकृत् ॥
कपिलाऽसंख्यदानस्य यत्फलं तदवाप्नुयात्।
मध्यं दिनकरेप्राप्ते यो लिंगं परिपूजयेत् ॥
सम्पूर्णां पृथ्वीं दत्वा यत्फलं तदवाप्नुयात्।
वारुणीमाश्रिते सूर्ये शिवं सम्यक् समर्चयेत् ॥
गवां शत सहस्रस्य दत्तस्य फलमाप्नुयात्।
आकाशं लिंगमित्याहुः पृथिवी तस्य च पीठिका ॥
प्रलये सर्वदेवानां लयनाल्लिंगमुच्यते ॥

शिव पूजा फलम् रहस्ये ॥

कलौ कलि मल ध्वंसं सर्व पापहरं शिवम्।
येर्चयन्ति नरानित्यं तेपिवन्द्या यथा शिवः ॥१॥
स्वयं यजति चेद्देवमुत्तमासोदरात्मजैः।
मध्यमा या भवेद्भृत्यैरधमा साधन क्रिया ॥२॥
देव पूजाविहीनो यः स नरो नरकेपचेत् ॥
यथा कथञ्चिद्देवार्चा विधेया श्रद्धयान्विताः ॥३॥
*जन्मतारा त्रये रोगान्मृत्युञ्चापि विनाशयेत्।

* जन्मनक्षत्रे, मंत्र महार्णवे ६। ३१। १६। ४७

विचेपादथवालिश्याज्ञप होमार्चनांतरा ।
उत्तिष्ठति तदान्यासं षडंगंविन्यसेत्पुनः ॥

शिवपूजने त्रिराचमनम् ॥

ॐ हां आत्मतत्वाय स्वाहा । ॐ हीं विद्यातत्वाय स्वाहा । ॐ हूं शिव तत्वाय स्वाहा ॥

शैवे द्वारदेवता पूजनम् ॥

ॐ नंदिने नमः । ॐ महाकालाय नमः । ॐ वृषभाय नमः । ॐ भृंगिरीटिने नमः । ॐ स्कन्दाय नमः । ॐ पार्वतीशाय नमः । ॐ चण्डेश्वराय नमः ॥

शिवपूजनं कृत्वास्य मंत्रस्य जपेन तीव्रोदरशूलो नश्यति । ॐ मीढुष्टम शिवतम शिवोनः सुमनाभव ॥ परमे वृक्षआयुधन्निधाय कृत्तिवासान आचर पिनाकं विभ्रदागहि ॥

## अथ पार्थिव पूजन विधिः ॥

मृदाहरण संघट्टनं प्रतिष्ठाह्वानमेव च । स्नपनं पूजनं चैव विसर्जनमतः परम् ॥ ॐ हरो महेश्वरश्चैव शूल पाणिः पिनाक धृक् । शिवः पशुपतिश्चैव महादेव इति क्रमात् ॥ इति क्रमः ॥ ॐ हराय नमः । इति मृदाहरणम् ॥ ॐ महेश्वराय नमः । इति संघट्टनम् ॥ ॐ शूलपाणये नमः । इति प्रतिष्ठा ॥ अथ ध्यानम् ॥ ॐ ध्यायेन्नित्यं महेशं रजतगिरि

निर्मं चारु चन्द्रावतंसं रत्ना कल्पोज्ज्वलांगं परशुमृगवराऽभीति हस्तं प्रसन्नम्। पद्मासीनं समन्तात्स्तुतिममरगणैर्व्याघ्रकृत्तिं वसानम्। विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रम्। इतिध्यात्वा॥ स्वशिरसिपुष्पंधृत्वामानसपूजांकृत्वादेवोपरिपुष्पं दत्वा स्वहस्तेनाञ्जलिं कृत्वा प्राणप्र तिष्ठां कारयेत्। ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं ह्रौं हंसः शूलपाणे इह सर्वेन्द्रियाणि वाङ्मनश्चक्षुः श्रोत्रं प्राणप्राणा इहागत्य सुखंचिरं तिष्ठन्तु स्वाहा। ॐ चो सं हंसः ह्रीं ॐ। स्वामिन्सर्व जगन्नाथ! यावत्पूजावसानकम्। तावत्त्वंप्रीति भावेन लिंगे स्मिन्सन्निधौ भव॥ इति पुष्पाञ्जलिं दद्यात्। ॐशूलपाणये नमः सुप्रतिष्ठोभव भो पिनाकधृक्! तिष्ठसन्निहितो वरदोभव अत्राधिष्ठानं कुरु २ ममपूजा गृहाण यावत्पूजां करोम्यहम् तावदिहाधिष्ठानं कुरु स्वाहा। ॐ अद्येत्यादि॰ सकल पातकक्षय पूर्वकं श्री उमामहेश्वर चरणारविन्दयोः परमार्द्धा भक्तिकामपूज्य लिंगपूजनमह करिष्ये॥

ॐ पशुपतये नमः आसनार्थं पुष्पं समर्पयामि नमः॥ ॐ पशुपतये नमः पादयोः पाद्यं समर्पयामि नमः। ॐ पशुपतये नमः हस्तयोरर्घ्यं समर्पयामि नमः ॐ पशुपतये नमः मुखे आचमनीयं समर्पयामि नमः॥ ॐ पशुपतये नमः सर्वांगे स्नानीयं समर्पयामि नमः। ॐ नमः शिवाय

यज्ञोपवीतोपवीतार्थे गंधाक्षत पुष्पाणि समर्पयामि नमः ॥ ॐ नमः शिवाय गन्धं विलेपयामि नमः। ॐ नमः शिवाय अक्षतान्समर्पयामि नमः॥ ॐ नमः शिवाय पुष्पाणि समर्पयामि नम। ॐ नमः शिवाय बिल्वदलानि समर्पयामि नमः॥ ॐ नमः शिवाय धूपं आघ्रापयामि नमः ॐ नमः शिवाय एपदीपः॥ ॐ नमः शिवाय इदं नैवेद्यं। आचमन ताम्बूल पुगीफलादीनि समर्पयामि नमः॥

अथाष्टमूर्ति पूजा वामावर्तेन ॥

ॐ सर्वाय क्षितिमूर्तये नमः। ॐ रुद्रायाग्नि मूर्तये नमः। ॐ भवाय जलमूर्तये नमः। ॐ उग्राय वायुमूर्तये नम॰॥ ॐ भीमाय आकाश मूर्तये नमः॥ ॐ पशुपतये यजमान मूर्तये नमः। ॐ ईशानाय सूर्य मूर्तये नमः॥ ॐमहादेवाय सोम मूर्तये नम॥ अथ मूलमंत्र १०८ जपं कुर्यात्। ॐनमः शिवाय इति मूलम्॥ अथ स्तुति ॥

सर्वज्ञान प्रविज्ञान प्रदायक महात्मने!॥ नमस्ते देव! देवेश! सर्वभूत हितेरतः॥ १॥ अनन्त कान्ति सम्भोग! परमेश! नमोस्तुते। अनन्तशान्ति सम्पन्न अनन्तासन संस्थित!॥ परापर परातीत! उत्पत्तिस्थिति कारक!। सर्वार्थ साधनोपाय! विश्वेश्वर! नमोस्तुते॥ सर्वार्थ निर्मला भोग! सर्वव्याधि विनाशन!॥ योगियोगि

महायोगी योगीश्वर ! नमोऽस्तुते ॥ कृत्वा लिंगप्रतिष्ठां च ध्यात्वादेवं सदा शिवम् ॥ पूजयित्वा विधानेन स्तवमेतदु-दीरयेत् । लिंगस्तवं महापुण्यं यः शृणोति सदानरः ॥ नोत्पद्यतेव संसारे स्थानं प्राप्नोति शाश्वतम् । पापकंचुक निर्मुक्तः प्राप्नोति परमं पदम् ॥ भविष्यपुराणे लिंगस्तवः समाप्तः ॥

ॐ गुह्यातिगुह्य गोप्तात्वं गृहाणास्मत्कृतं जपं ॥ सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर ॥॥ इति पठित्वा जलं सदाशिव दक्ष करे दत्वा गंडूषवाद्यं [1]संहारमुद्रया विसर्जयेत् । ॐ गच्छ २ महादेव गच्छ २ पिनाकधृक् ॥ कैलासादि पीठे गच्छन्तु यत्र तिष्ठति पार्वति ॥

## महारुद्रादौ शिववास फलम् ।

तिथिं च द्विगुणी कृत्य बाणैः संयोजयेत्तत । सप्तभिश्चहरेद्भागं शिववासं समुद्दिशेत् ॥ १ ॥ एकेनवासः कैलासे द्वितीये गौरि सन्निधौ । तृतीये वृषभारूढ़ सभार्यां च चतुष्टये ॥२॥ पंचके भोजने चैव क्रीड़ायां परिमते तथा । श्मशाने सप्तशेषे च शिववास इतीरितः ॥ कैलासे लभते सौख्यं गौर्यां च सुख सम्पदः । वृषभे ऽभीष्ट सिद्धिः स्यात्सभा संताप कारिणी ॥ भोजने च भवेत्पीड़ा क्रीड़ायां

---

टिप्पणी—१ दक्षिण हस्त अगुष्ठ तर्जनीभ्यां दक्षिण गंडेघातं कुर्यात ॥

इष्मैव च। श्मशाने मरणं ज्ञेयं फलमेवं विचारयेत्॥

शिव वासे शुभ तिथयः।

शुक्ल पक्षे शुभ तिथयः २-५-६-६-१२-१३

कृष्ण पक्षे शुभ तिथयः १-४-५-८-११-१२-३०

प्रयोगारम्भे सूर्यमात शुभाशुभ फलम्॥

| स्थान | भानि | फलानि |
|---|---|---|
| शीर्षे | ३ | हानिः |
| मुखे | ३ | सिद्धिः |
| कंठे | ३ | मृत्युः |
| हस्ते | ४ | शत्रु भयन |
| हृदये | ४ | इष्टाप्तिः |
| उदरे | ३ | हानि |
| कट्यां | ३ | इष्टाप्ति |
| चरणे | ४ | धनदः |

यामलोक्त लक्ष्मीप्राप्ति प्रकारः १२ सहस्रं १२ शतं वा पठेत्।

ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं

श्रीं महालक्ष्मि नमः दुर्गेस्मृता हरसिभीतमशेषजन्तोः स्वस्थैः स्मृतामतमतीव शुभान्ददासि हिरण्यवर्णांहरिणीं सुवर्णं रजतस्रजाम् ॥ चन्द्रां हिरण्मयींलक्ष्मीं जातवेदो म आवह दारिद्र्य दुःख भयहारिणि कात्वदन्या सर्वोपकार करणाय सदार्द्रचिता ॐ श्रीं ह्रीं श्रीं कमलेकमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं महालक्ष्मि नमः ॥ १ ॥ एवं क्रमेण ॥

ॐ श्रीं ह्रीं श्रीं दुर्गेस्मृता० ताम्म आवह० दारिद्र्य० ॐश्रीं ह्रीं श्रीं० २, अश्वपूर्वां० ३, कासोस्मितां ४ चंद्रप्रभासां० ५, आदित्य वर्णे० ६, उपैतुमां० ७, क्षुत्पिपासा० ८ गन्धद्वारां० ९, मनसः० १०, कर्दमेनप्रजा० ११, आपः सृजन्तु० १२, आर्द्रांयःकरणीं १३, आर्द्रांपुष्करिणीं० १४, तांम आवह० १५, यः शुचिः प्र० १६।

अथ अपाकरण भौमप्रयोगः ॥

खदिराङ्गारकेनाथ ! कुर्याद्रेखा समत्रयम् ।
वामपादेन मंत्राभ्यामेताभ्यांतत्प्रमार्जयेत् ॥ १ ॥
दुःखदौर्भाग्य नाशाय पुत्र (पौत्र) संतान हेतवे ।
कृतरेखात्रयं वामपादेनतत्प्रमाज्म्र्यहम् ॥ २ ॥
ऋणदुःख विनाशाय मनोभीष्टार्थ सिद्धये ।
मार्जयाम्यसितारेखास्तिस्रोजन्म त्रयोद्भवाः ॥ ३ ॥
ततः पुष्पाञ्जलि करा स्तुवीत धरणी सुतम् ।

ध्यायती चरणाम्भोजं पूजार्मागन्त्र सिद्धये ॥ ४ ॥
धरणी गर्भसम्भूतं विद्युत्तेजः समप्रभम् ।
कुमारं शक्ति हस्तं च मंगलं प्रणमाम्यहम् ॥ ५ ॥
ऋणहर्त्रे नमस्तुभ्यं दुःख दारिद्रय नाशिने ।
नमामि द्योतमानाय सर्वकल्याण कारिणे ॥ ६ ॥
देव दानव गन्धर्व यक्ष राक्षस पन्नगाः ।
सुखंयान्ति यतस्तस्मै नमो धरणि सूनवे ॥ ७ ॥
यो वक्र गतिमापन्नो नृणांविघ्नं प्रयच्छति ।
पूजित सुख सौभाग्यं तस्मै क्षमा सूनवे नमः ॥
प्रसादं कुरु मे नाथ ! मंगल प्रद ! मंगल ! ।
मेषवाहन ! रुद्रात्मन् ! पुत्रान् (पौत्रान्) देहि धनं यशः॥

मौम गायत्री तथा वैदिक मन्त्रः ॥

ॐ अंगारकाय विद्महे शक्तिहस्ताय धीमहि तन्नोभौमः प्रचोदयात् । ॐ अग्निर्मूर्धादिवः ककुत्पतिः पृथिव्याऽअयम् ॥ अपाꣳरेताꣳसि जिन्वति ॥ यथाशक्ति जपेत् ॥

## अथ शनैश्चर जाप प्रारम्भः ॥

शनौ प्रातःकाले ७ वार पठनीयम् ।

यःपुरा राज्य भ्रष्टाय नलाय प्रददौ किल ।
स्वप्नेशौरिः स्वयंमन्त्रं सर्वकाम फलप्रदम् ॥ १ ॥
मोऽंनीलांजनं प्रख्यं नीलजीमूत सन्निभं ।

छाया मार्तण्ड सम्भूतं नमस्यामि शनैश्चरं ॥ २ ॥
ॐ नमोर्कपुत्राय शनैश्चराय नीहारवर्णांजन नीलकाय।
स्मृत्वारहस्यं भुविमानुपत्वे फलप्रदो मे भव सूर्यपुत्र ॥३॥
नमोस्तु प्रेतराजाय कृष्णवर्णाय ते नमः।
शनैश्चराय क्रूराय सिद्धिबुद्धि प्रदायिने ॥ ४ ॥
य एभिर्नामभिस्तौति तस्य तुष्टोभवाम्यहम्।
मामकानांभयं तस्य स्वप्नेष्वपि न जायते ॥ ५ ॥
गार्गेय कौशिकस्यापि पिप्पलादो महामुनिः।
शनैश्वर कृतापीड़ा न भवन्ति कदाचन ॥ ६ ॥
क्रोडस्तु पिंगलो बभ्रुः कृष्णो रौद्रान्तको यमः।
शौरिः शनैश्वरो मंद पिप्पलादेन संयुतः ॥ ७ ॥
एतानि शनिनामानि प्रातरुत्थाय यः पठेत्।
तस्य शौरेः कृतापीड़ा न भवन्ति कदाचन ॥ ८ ॥

इति शनि स्तुतिः ॥

अथ शनिभार्या नाम ॥ १ ध्वजनी, २ धामनी, ३ चैव कंकाली, ४ कलहप्रिया ॥ ५ कलही, ६ कंटकी, ७ चापिध्वजा, ८ महिषी, ९ तुरंगमा ॥ नामानि शनिभार्यायाः नित्यं जपतियःपुमान्। तस्य दुःखाविनश्यन्ति सुख सौभाग्य प्रवर्द्धते ॥ इति शनिभार्यानाम ॥

---

एक कुंडस्य पश्चिम दिक् कर्त्तव्यतामाह । महादान-निर्णये वसिष्ठ पञ्चरात्रे । भुक्तौ मुक्तौ तथा पुष्टौ जीर्णोद्धारे तथैव च। सदा होमे सदा शान्तिके वारुण दिग्गतम् शारदा तिलके। होतुरग्रेयोनिरासामुपर्यश्वत्थ पत्रवत् । मुष्टयरत्न्येक हस्तानां कुँडानांयोनिरीरिता । षट् चतुर्द्वयङ्गुलायामविस्तारोन्नति-शालिनो । एकाङ्गुलंतुयोन्यग्रं कुर्यादीषदधोमुखम् एकै-काङ्गुलतो योनिंकुण्डेष्वन्येषु वर्द्धयेत् । यावद्दृयक्रमेणैव योन्यग्रमपि वर्द्धयत् । स्थलादारभ्यनालंस्याद्यान्या मध्ये सरन्ध्रकम् । आसांमेखलानां अश्वत्थपत्र वदित्यनेनचतुर-गुल विस्तृतमूलाद्यथोक्त क्रमेण एवाङ्गुलां तत्संकुचित विस्तारः होम निमित्ताग्निस्थापनार्थस्थण्डिलविधिः । वसिष्ठ संहितायां । तस्मात्सम्यक्परीत्त्यैवंकर्त्तव्याशुभवेदिका । हस्त-मात्रंस्थंडिलम्त्र संक्षिप्ते होम कर्मणि । क्रियासारेपि । कुण्डमेवं विधन्यस्यात् स्थडिलं वासमाश्रयेत् शारदा तिल-केपि । नित्यंनैमित्तिकंकाम्यं स्थंडिलं वा समाचरेत् । हस्त-मात्रंतु तत्कुर्याचतुरस्रं समन्ततः इति तिथ्यादि तत्त्वेऽपि च गोभिलः ॥ अनुगुप्ता अपआहृत्य प्रागुदक्प्रवण देशं समं वा परिसमुह्य उपलिप्य मध्यतः प्राचींरेखामुल्लिख्य उदीचीं च संहतां पश्चान्मध्यप्राचोऽतिस्रः उल्लिख्याभ्युक्षयेल्लक्षणा वदेषा सर्वत्रेति । अनुगुप्ता आच्छादितः । पवितादिभिरुदका

इति यावत् । प्राङ्नीचादि फल माह गृह्यसंग्रहे गोभिल पुत्रः। प्राङ्नीचब्रह्म वर्चस्यमुदङ् नीचं यशोत्तमम् । पितृपदंदक्षिण- तोनीचम् प्रतिष्ठालम्भकं समम् । यशोत्तममित्यत्र सान्ता अप्यदन्ता इत्युक्तेरदन्तोपि यश शब्दः गयाशिरे इति वत् । परिसमुह्य सर्वतः कुशैः पांश्वादिकमपसार्य्य उत्तरस्यान्दिशि- साद्धं हस्तोपरिचिपेत् । परि समुह्य वितस्तित्रये उत्तरतउत्कर करोतीति हरिशर्मधृतिवचनात् । तत्तदुपलेपनम् । तत्र कार- णमाह गृह्यसंग्रह ॥ इंद्रेणवज्राभिहतः पुरावृत्रो महासुरः । मेदसातस्य संक्लिन्नातदर्थमुपलेपयेत् । इति · मध्यतःस्थं- डिला भ्यन्तरे दक्षिणांशे नतु मध्यांशे उदग्गतैकविंशत्यङ्गु- लरेखानुरोधात् अन्यथाकुशैः संमाजयेद्भूमिंशुद्धामादौ- शुचिस्ततः हस्तमात्रांचतुरस्रांगोमयेनोपलेपयेत् इतिभारद्वा- जीय हस्तप्रमाणस्थण्डिलेतदनुपपत्तेः । प्राचीम्प्राग्गताम् । उदीचीश्च संहताम् पश्चादिति । प्राग्गतया पश्चिमे भागे संलग्नामुदग्गग्रां मध्येउदग्गतया प्राची· प्राग्प्रास्तिस्रोरेखा उल्लिख्याभ्युक्षयेदिति रेखाम्य उद्धृत मृत्तिकोद्धरण पूर्वक- मभ्युक्षयेत् । उल्लिख्य उद्धृत्याभ्युक्षयेदिति कात्यायन सूत्रात् ॥ उत्कर प्रक्षेपदेशमाह गृह्य संग्रहः । उत्कर गृह्य रेखाभ्योऽरत्निमात्रे निधापयेत् · द्वारगैतत्पदार्थानाम् प्रागु- दीच्यान्दिशि स्मृतम् ॥ इति ॥ परिसमूहनादि पवित्रकान्तं कर्म

लेखन संज्ञकं तस्य लक्षणस्याकृतप्रक्रिया सर्वत्र यत्र यत्राग्नि प्रणयनं तत्र तत्र बोध्या रेखा प्रमाणमाह । छन्दोग परिशिष्टे कात्यायन । दक्षिणे प्रागगतायास्तु प्रमाणं द्वादशाङ्गुलम् ॥ तन्मूल लग्ना चोदीची तस्याएकवोत्तरम् । उदग्गताया संलग्नाश्शेषाः प्रादेशमात्रकाः सप्तसप्ताङ्गुलीस्त्यक्त्वा कुशेनैव* समुल्लिखेत् ॥

नवोत्तर नवाधिक द्वादशांगुलमेकविंशत्यंगुलमित्यर्थ ॥ शेषाः उक्तरेखयोर्शिष्टास्तिस्त्र कुशेन इति सर्वत्राभिसम्बध्यते । एवं कारेण शाखान्तरोक्तस्य व्यावृत्तिः ॥ रेखाणां देवतावर्णांश्चाह स्मृतिः । प्रागगता पार्थिवीज्ञेया चाग्नेयी चाप्युदग्गता ॥ प्राजापत्या तथा चैन्द्री सौमी च प्राक्कृतास्मृता । पार्थिवी पीतवर्णास्यादाग्नेयी लोहिता भवेत ॥ प्राजापत्या भवेत्कृष्णा नीला चैन्द्री प्रकीर्तिता । श्वेतवर्णेन सौमीस्याद्रेखाणां वर्ण लक्षणम् ॥ अग्निस्थापन पर्यन्तं सव्यहस्त प्रादेशस्य विधानमाह गृह्य संग्रहे । सव्यं भूमौ प्रतिष्ठाप्यप्रोल्लिखेद्दक्षिणे न तु ॥ तावन्नोत्थापयेत्पाणि

---

* तथा च संग्रहकारः ॥ फलेनफलमाप्नोति पुष्पेणश्रियमिच्छति पत्रेणाधनलाभश्च दीर्घमायुःकुशेन तु ॥ भवेन्नखेनकुनखी कीलेन व्याधि मृच्छति । सम्मनाद्हुतनाशः स्यान्मृन्मयेनकलिध्रुवम् ॥ तस्मात्फलेनपत्रेण कुशेनकुसुमेन वा । प्रागग्रोल्लेखनं विप्रःसिद्धिः कर्मसु सर्वदा ॥

यावदग्निं निधापयेत् । मानकर्तारमाह छन्दोग परिशिष्टे कात्यायनः ॥ मानक्रियायामुक्तायामनुक्तेमान कर्तरि । मानः स्याद्यजमानस्याद्विदुषामेष निश्चयः ॥ अंगुष्ठाङ्गुलिमानमाह स एव । अगुष्ठाङ्गुलिमानन्तु यत्र यत्रोपदिश्यते ॥ तत्र तत्र बृहत्पर्व ग्रन्थिभिर्मिनुयात्सदा । यजमानासन्निधौ होमे तु साधारणाङ्गुलिमानम् ॥ यथा कपिल पञ्चरात्रे । अष्टभिस्तैः मैर्ज्येष्ठ्यं मध्यमं सप्तभिर्यवैः । कन्यसं षड्भिरुद्दिष्टमंगुलं मुनि सत्तमैः ॥ तैःप्रक्रम्य मानयवैः । कन्यसं कनिष्ठम् ॥ मानन्तु पार्श्वेन । षड्यवाः पार्श्वमिताः ॥ संस्कारतत्त्वे कात्यायन वचनात् । नाजप्तः सिद्ध्यते मन्त्रो नाहुतश्च फलप्रदः ॥ नानिष्टो यच्छतेकामांस्तस्मात्रितयमर्चयेत् । पूजया लभते पूजां जपात्सिद्धिर्न संशयः । विभूतिश्चाग्नि कार्येण सर्वं सिद्धिश्चविंदति ॥ नीलतन्त्रेपि । नित्यहोमं प्रवक्ष्यामि सर्वार्थयेन विन्दति । सपर्यां सम्प्रगापाद्य बलिपूर्वश्चरेद्विधिम् ॥ ततो होमन्तर्पणञ्च चरेत्साधक सत्तमः ॥ बलिर्वैश्वादिकं चैव ग्रासग्रसमुपाचरेत् । अर्घ्योदकेन संप्रोक्ष्यतिस्रो रेखास्समालिखेत् । विधिवदग्निमानीयक्रव्यादेभ्यो नमस्तया ॥ मूलमन्त्रं समुच्चार्य कुंडेवा स्थण्डिलेपिवा ।

भूमौ वा संस्तरेद्वह्नि १ व्याहृति त्रितयेन च ॥ ततोदेवं समावाह्य मूलेन षोडशाहुतिम् ॥ हुत्वा स्तुत्वा नमस्कृत्य विसृजेदिन्दु मण्डले ॥ इति तांत्रिक कुशंडिका विधिः ॥

एवं जप समाप्यान्ते दशहोमं समाचरेत् ! प्राणानायम्य, षडङ्गन्यासादिकम् मूलेन कृत्वा मूलेन ईक्षणम् फट् इति कुशै स्तरणम् ॥ हुँ मुष्टिबद्धाग्नि सिंचेत् ततो त्रिकोण षट्कोण, अष्टदल भूपुरात्मक यन्त्रं विलिख्य यंत्र मध्ये तारपुटां ( मायां ) प्रासादबीजं वा लिखित्वा पीठमर्चयेत् । ॐ मं मण्डूकादि परतत्वान्त पीठशक्तिभ्यो नमः । ॐ ह्रीं वागीश्वरी वागीश्वरयोर्योगपीठाय नमः, ॐ ह्रीं वागीश्वराय नमः । ॐ ह्रीं वागीश्वर्यैनमः ॥

ततः फडिति मन्त्रेणाग्निपात्रं गृहीत्वा हुमित्यनेन तमुद्घाटयेत् । पुनः अस्त्र मन्त्रेण नैर्ऋत्यकोणे क्रव्यादांशंत्यक्त्वा मूलेनपुरतो धृत्वा वीक्षणादि संस्कारान्कृत्वा ॥

---

१-टिप्पणी-अग्निकलमाह गौतमीये । पाषाण भव वह्नि च यदि वारणि सम्भवम् । श्रोत्रियाणां गेहजं च वनस्थं वाथमाहरेत ॥ यद्वच्छालाभ संयुक्तो ऽप्ययोग्यो यागकर्मणि । निरग्नि ब्राह्मणा हलब्धो ह्यर्द्ध लाभकरो भवेत् । तत्र यथा चतुर्थांशं फलंदद्याद् हुताशनः । वैश्याच्छूद्राच्चविफलं जायते होम कर्मणि । तस्मात्सर्व प्रयत्नेन वह्निमुक्तंसमाहरेत् । तन्त्रान्तरे ॥ द्विजाति भवनाद्वापि-वह्निमानीय साधकः ।

वह्निदेवतयो रात्मना सहैक्यं विभाव्य ॐ रं इत्यनेनाभि-मंत्र्य वं धेनुमुद्रयामृतीकृत्य बाहुभ्यां समुद्धृत्य त्रि प्रणव (ॐ) पठेत्। कुण्डोपरि त्रि भ्राम्यजानु स्पृष्टमहीतलः शिव-बीज बुद्धयात्मनोभिमुख देव्या योनौएनं ( अग्नि ) क्षिपेत्॥ ॐ हीं सावरण वह्निमूर्तये नमः। अनेन सम्पूज्य रं वह्नि चैतन्याय नमः इति चैतन्यं संयोज्य ॥ विश्राण्य आचमनादि दत्वा ॥ चित्पिंगल हन २ दह २ पच २ सर्वज्ञाज्ञापय स्वाहा। काष्ठं धृत्वा ज्वालयेत् ॥

ज्वालिनी मुद्रा।

मणिबन्धयुतौ कृत्वा प्रसृताङ्गुलिकौकरौ।
कनिष्ठांगुष्ठ युगले मिलित्वान्त प्रसारिते॥
ज्वालिनी नाम मुद्रेयं वैश्वानरप्रियंकरी ॥ध्यानम्॥

अग्नि प्रज्वलितं वन्दे जातवेदं हुताशनम्। सुवर्ण वर्ण ममलं समिद्धं विश्वतोमुखम्॥ इत्युपतिष्ठेत्॥ भो॥ अग्ने-त्वं वरदनामासीति शांति पुष्टिवृद्धि कार्येषु॥ ॐ वैश्वानर जातवेद इहा वह लोहिताक्ष सर्वकर्माणि साधय स्वाहा अनेन मंत्रेण अर्घ्यादि पूजनं कार्यम्। अथ सप्तजिह्वापूजनम्। स्यूं हिरण्यायै नमः॥ प्यूं गगनायै नमः। न्यूं रक्तायै नमः॥ व्यूं कृष्णायै नमः। ल्यूं सुप्रभायै नमः। र्यूं बहुरूपायै नमः। ण्यूं अतिरिक्तायै नमः॥ ॐ गीर्वाणादि

अग्निजिह्वाधिष्ठात् देवताभ्यो नमः। ॐ सहस्रार्चिषे हृदयाय नमः॥ इति अग्नि षडंगेभ्यो नमः। ॐ अग्नये जात वेद- सेत्याद्यष्ट मूर्तिभ्यो नमः॥ तद्बाह्ये। अग्न्याद्यष्ट शक्तिभ्यो नमः। तद्बहिः पद्माद्यष्टनिधिभ्यो नमः॥ तद्बाह्ये। इन्द्रादि लोक पालेभ्यो नमः। तत्रैव वज्राद्यस्त्रेभ्यो नमः॥ ततः प्रादेशमात्रं कुशपत्रद्वयं घृत मध्ये निक्षिप्य सव्यापसव्य मध्य भागेषु इडां पिंगलां सुषुम्णां ध्यात्वा होमं कुर्यात्। स्रुक्स्रुवयोः संस्कारं कृत्वा वाम भागाज्यं गृहीत्वा॥ ॐ अग्नये स्वाहा॥ इत्यग्ने दक्षिण नेत्रे जुहुयात्। तथैव। ॐ सोमाय स्वाहा, वाम नेत्रे जुहुयात्॥ मध्यनेत्रे ॐअग्नि सोमाभ्यां स्वाहा। ॐ अग्नये स्विष्ट कृते स्वाहा॥ इत्यग्नि मुखे। ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्व कर्माणि साधय स्वाहा। इत्यनेन त्रिवारं जुहुयात्॥ ततोग्नौ मूलं- पीठपूर्वकं देवतां सम्पूज्य। तन्मुखे घृतेन मूलमंत्रेण २५ वारं जुहुयात्॥ वन्हि देवत्योरात्मना सहैक्यं विभाव्य मूल- मंत्रेण ११ दशाहुतीर्जुहुयात् ततोसावरण देवता हवने असमर्थता काले मूलमंत्रस्यांगदेवता स्वाहा। शक्तश्चेत् प्रत्येकं एकैकाहुतिर्जुहुयात्॥ ततः सङ्कल्पं विधाय॥ तत्तत्कल्पोक्त द्रव्येण होमं कुर्यात्। ततो मूलेन पूर्णाहुतिं दत्वा संहार मुद्रया स्वेष्ट देवतां हृदये समानीय क्षमस्व इति

विसृज्य दक्षिणादिना स्वगुरुं सम्पूज्य ॥ इति सुल्तानपुर निवासि विद्वद्वर पं० तुलाराम गोस्वामी तनुज भू० पू० श्री वि० प०च० पाठशालायाः कर्मकाण्ड यजुर्वेदाध्यापकेन श्री लक्ष्मीनारायण गोस्वामिना सङ्कलिता शिवार्चनस्मृतौ पूर्वार्धि समाप्ता॥

## ॥ अथ श्रीरुद्राभिषेकमाहात्म्यम् ॥

अनुष्टुब्वृत्तम् ॥

रुद्राभिषेकमाहात्म्यं देवानामपि दुर्लभम् ।
पठेद्यः प्रयतो भक्त्या प्राप्नोति परमां श्रियम् ॥ १ ॥
वंशवृद्धिः कुले कीर्तिरायुष्यमचलं ध्रुवम् ।
जायते सततं तस्य नैरुज्यं वर्द्धते परम् ॥ २ ॥
दुर्भिदौर्भाग्यशत्रूणां पठनाद्याति संक्षयः ।
सौभाग्यवृद्धिमित्राणां प्राप्तिर्भवति तत्क्षणात् ॥ ३ ॥
पतिव्रतां प्रियां पत्नीं भ्रातरं राजरूपिणम् ।
प्रतापिनं सुतं दद्यं मुक्तिमाप्नोति दुर्लभाम् ॥ ४ ॥
इष्टां विद्यां समाप्नोति सन्मानं लभते परम् ।
सदाशिवप्रसादेन सर्वमाप्नोत्यसंशयम् ॥ ५ ॥

अद्येत्यादि० एवंगुणविशेषणविशिष्टायां शुभपुण्यतिथौ मम (यजमानस्य) आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं धर्मार्थ काममोक्षसिद्धिद्वारा सर्वव्याधिविनाशपूर्वकं झटिति सर्वाभीष्टसिद्ध्यर्थं ॐ भूर्भुवःस्वः श्रीभवानीशङ्करमहारुद्रदेवताप्रीत्यर्थं यथाज्ञानेन यथामिलितोपचारद्रव्यैःषडङ्गन्यासपूर्वकं पुरुषसूक्तेन ध्यानावाहनादिषोडशोपचारैः अन्योपचारैश्च सकृद्रुद्रावर्त-

नेनाभिषेक [रुद्रं महारुद्रमतिरुद्रं वा] पूर्वकपूजनमहं करिष्ये॥
षडङ्गन्यासाः–मनोजूतिरिति मन्त्रस्य बृहस्पतिर्ऋषिः बृहती-
छन्दः बृहस्पतिर्देवता हृदयन्यासे (हवने) जपे विनियोगः॥
ॐ मनोजूतिर्जुषतामाज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं-
य ज्ञ०समिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामों ३
म्प्रतिष्ठ ॥ ॐहृदयाय नमः॥ १ ॥ अबोध्यग्निरिति मंत्रस्य
बुधगविष्ठिरा ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता शिरोन्यासे
(हवने) जपे विनियोगः ॥ ॐ अबोध्यग्निः समिधाजना
नाम् तिधेनुमिवायतीमुषासम् ॥ यह्वाऽइवप्रवयामुज्जिहाना
प्रभानवः-सिस्रतेनाकमच्छ ॥ ॐ शिरसे स्वाहा ॥ २ ॥
मूर्द्धानमिति मन्त्रस्य भरद्वाजऋषिः त्रिष्टुप्छन्दः अग्निर्देवता
शिखान्यासे (हवने) जपे विनियोगः ॥ ॐमूर्द्धानन्दिवोऽअ-
रतिम्पृथिव्यावैश्वानरमृतऽआजातमग्निम् ॥ कविंᳫ सम्राज-
मतिथिञ्जनानामासन्नापात्रञ्जनयन्त देवाः॥ ॐशिखायै वषट्
॥ ३ ॥ मर्म्माणित इति मन्त्रस्य अप्रतिरथऋषिः विराट्-
छन्दः मर्म्माणि देवता कवचन्यासे (हवने) जपे विनियोगः।
ॐ मर्म्माणितेवर्म्मणाच्छादयामि सोमस्त्वाराजामृतेनानु-
वस्ताम् ॥ उरोर्व्वरीयोव्वारुणस्तेकृणोतुजयन्तन्त्वानुदेवाम-
दन्तु ॥ ॐकवचाय हुम् ॥ ४ ॥ विश्वतश्चक्षुरिति मन्त्रस्य
विश्वकर्माभौवनऋषिः त्रिष्टुप्छन्दः विश्वकर्मा देवता नेत्रन्यासे

(हवने) जपे विनियोगः ॥ ॐ विश्वतश्चक्षुरुतविश्वतो मुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यान्धमतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएक ÷ ॥ ॐ नेत्रत्रयाय वौषट् ॥ ५ ॥ मानस्तोक इति मन्त्रस्य परमेष्ठी ऋषिः जगतीछन्दः एकरुद्रो देवता अस्त्रन्यासे (हवने) जपे विनियोगः ॥ ॐ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः॥ मानोव्वीरान्रुद्र भामिनोव्वधीर्हविष्मन्तःसदमित्त्वा हवामहे ॥ ॐ अस्त्राय फट् ॥ ६ ॥ इति न्यासान्कृत्वा कलशपूजनम्—*कलशस्य मुखे विष्णुः० इति कलशमावाह्य तस्मिन्वरुणावाहनम् - ॐ तत्त्वायामिब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानोहविर्भिः । अहेडमानोवरुणेहवोध्युरुश ँ समानऽआयुः प्रमोषीः ॥ अस्मिन्कलशे वरुणमावाहयामि ॥

* ओंकलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः ॥ मूले तत्रस्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ १ ॥ कुक्षौतु सागरास्सप्त सप्तद्वीपा वसुन्धरा॥ ऋग्वेदोथ यजुर्वेदो सामवेदाह्यथर्वणः ॥ २ ॥ अंगैश्च सहिताः सर्वेकलशंतु समाश्रिताः ॥ अत्रगायत्री सावित्री शान्तिः पुष्टि करी सदा ॥ ३ ॥ आयान्तु "१ यजमानस्य" ( ममगृहेच ) दुरित क्षयकारकाः ॥ सर्वेस मुद्राः सरितस्तीर्थानि जलदानदाः ॥ ४ ॥ आयान्तु "२ यजमानस्य" ( ममगृहेच ) दुरितक्षय कारकाः ॥

१-२—देवपूजार्थं इत्यादि पाठः ।

कलशप्रार्थना—देवदानवसंवादे० १इति संप्राथ्य ॐ भूर्भुवःस्वः कलशस्थवरुणाय नमःआवाहयामि । सर्वोपचारार्थे गन्धाक्षत पुष्पाणि समर्पयामि नमस्करोमि ॥ ततः कलशोदकेन पूजा द्रव्याणि तथात्मानं च संप्रोक्ष्य अपवित्रः० इति मंत्रेण॥ कलशमुद्रां२ प्रदर्श्य ॥ शङ्खपूजनम्—ॐअग्निऋषिः पवमानः पाञ्चजन्यः पुरोहितः। तमीमहेमहागयम् ॥ ॐ भूर्भुवःस्वः शङ्खस्थदेवतायै नमः आवाहयामि सर्वोपचारार्थे गन्धाक्षत-पुष्पाणि समर्पयामि नमस्करोमि ॥ शङ्खमुद्रां३ प्रदर्श्य॥ घण्टा

(१) देवदानव संवादे मध्य माने महो दधौ ॥ उत्पन्नोसि तदा कुंभः विधृतो विष्णुना स्वयम् ॥ १ ॥ त्वत्तोये सर्व तीर्थानिदेवाः सर्वे त्वयिस्थिताः॥ त्वयितिष्ठन्तिभूतानि त्वयिप्राणाः प्रतिष्ठिताः ॥ २ ॥ शिवः स्वयंत्वमेवासि विष्णुस्त्वंच प्रजापतिः ॥ आदित्या वसवोरुद्रा विश्वेदेवाः सपैतृकाः ॥ ३ ॥ त्वयितिष्ठन्तिसर्वेऽपियतः कामफलप्रदाः ॥ त्वत्प्रसादादिमंयज्ञं कर्तुमीहे जलोद्भव ॥ ४ ॥ सान्निध्यंकुरुमेदेव । प्रसन्नोभव सर्वदा ॥ पाशपाणेनमस्तुभ्यं पद्मिनीजीव नायक ॥ ५ ॥ प्रधान पूजनं यावत्तावत्वं सन्निधोभव ॥

कुम्भ मुद्रा—हस्तयेन सावकाशाक मुष्टिकरणे कुम्भ मुद्रा

शङ्ख मुद्रा—वामाङ्गुष्ठं तु संगृह्य दक्षिणेन तु मुष्टिना ।
कृत्वोत्तानं तथा मुष्टि मङ्गुष्ठन्तु प्रसारयेत् ॥
वामाङ्गुल्यस्तथा श्लिष्टाः संयुक्ताः सुप्रसारिताः ।
दक्षिणाङ्गुष्ठसंलग्ना मुद्राशंखस्यभूविदा ॥

पूजनम्—ॐ सुपर्णोसि गरुत्मांस्त्रिवृत्तेशिरोगायत्रञ्चक्षुर्बृहद्रथन्तरेपक्षौ। स्तोमआत्मा छन्दांस्यङ्गानियजू,ं षिनाम। सामतेतनूर्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याःशफाःसुपर्णोसिगरुत्मान्दिवंगच्छस्वः पत ॥ ॐभूर्भुवःस्वः घण्टास्थाय गरुडाय नमः आवाहयामि सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि ॥ घण्टामुद्रां प्रदर्शयेत् दीपपूजनम्—ॐअग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्य्योज्योतिर्ज्योतिः सूर्य्यः स्वाहा। अग्निर्व्वर्च्चोज्योतिर्व्वर्च्चः स्वाहासूर्य्योवर्चोज्योतिर्व्वर्च्चः स्वाहा। ज्योतिः सूर्य्यः सूर्य्योज्योतिः स्वाहा॥ ॐ भूर्भुवः स्वः दीपस्थदेवतायै नमः आवाहयामि सर्वोपचारार्थ गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि ॥ शिवध्यानम्—* ॐ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः। बाहुभ्यामुततेनमः ॥ आवाहनम्—ॐसहस्रशीर्षा० ॐभूर्भुवः स्वः श्रीभवानीशङ्करदेवताभ्यो नमः आवाहनं समर्पयामि ॥ आसनम्—ॐ पुरुषएवेद० ॐ भू० श्री० नमः आसनं सम०॥ पाद्यम्—ॐएतावानस्य० ॐ भू० श्री० नमः पाद्यं सम० ॥ अर्घ्यम्—त्रिपादूर्ध्व० ॐ भू० श्री० नमः अर्घ्यं सम० ॥ आचमनम्—ॐ ततो विराड० ॐ भू० श्री० नमः आचमनीयं सम० ॥ स्नानम् ॐ तस्माद्यज्ञा० ॐ भू० श्री० नमः

घंटा मुद्रा—वाममुष्टि भ्रामयेदिति घंटा मुद्रा।

* ध्यानं १४० सफे में है।

४ ३ ३ ३ ७ ११ २ ७

ञ्चिगमश्च रामरामद्विकैककम्। द्वौ द्वौ पृथग्भिर्मन्त्रैस्तु नम-

१ २ ३ ४ ५ ६

कास्त्वमकाः स्मृताः ॥ वाजश्च सत्यपूर्वश्चरिमाचाग्निरंशुप्

७ ८ ९ १० ११

तथाग्निरुः ॥ एकाचैव चतस्रश्च त्र्यविर्वाजा इति क्रमः॥"
एवं चमकानेकादशधा विभज्य एकैकभागं नमकेषु संयोज्य पठेत्स "रुद्रः" ॥ तैरेकादशरुद्रैः "लघुरुद्रः" ॥ तैरेकादश-गुणैः "महारुद्रः" ॥ तैरेकादशावृत्तैः "अतिरुद्रः" ॥

कुम्भ मुद्रा—मुष्टयोरूर्ध्वीकृताङ्गुष्ठे तर्जन्यग्रे प्र विन्यसेत्।
सर्व रक्षाकरीह्येषा कुम्भमुद्रा प्रकीर्तिता ॥
अंकुश मुद्रा। ऋज्वीं मध्यमिकांकृत्वा तर्जनीं मध्यपर्वणि॥
संयोज्याकुञ्चयेत्किंचिन्मुद्रेषांकुश संज्ञिता ॥

---

१ एक ब्राह्मण से "रुद्र" ११ ब्राह्मण द्वारा "लघुरुद्र"
१२१ ब्राह्मण द्वारा "महा रुद्र" १३३१ ब्राह्मण द्वारा "अति रुद्र"

बाणरावणचंडीशनंदीभृंगीरिटादयः॥ सदाशिवप्रसादेन ते सर्वेगृह्णन्तुशांभवाः ॥ अजोहरि हिरण्याख्य बाणासुर गजाननाः ॥ वसिष्ठव्यासवाल्मीकि दुर्वासागस्त्य गौतमाः ॥ सदाशिवप्रसादेन ते सर्वेगृह्णन्तुशांभवाः ॥ ओंनमः शिवाय षडक्षर मष्टोत्तरशतंज पेत्॥ ओं तत्पुरुषायविद्महेमहादेवायधीमहितन्नोरुद्रःप्रचोदयात्॥ इति रुद्र गायत्री दश वारंजप्त्वाततः ॥
ऋण रोगादि दारिद्र्य पापक्षुद्रापमृत्यवः ॥
अशेषाघ प्रणाशायप्रसीद मम शंकर ॥

श्रीगणेशाय नमः॥ हरिः ॐ ॥ गणानान्त्वागणपति ७ हवामहेप्प्रियाणान्त्वाप्प्रियपति ७ हवामहे निधोनान्त्वानिधिपति ७ हवामहेव्वसोमम ॥ आह मजानिगर्ब्भधमात्त्वमजासिगर्ब्भधम् ॥ १ ॥ गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यासह ॥ बृहत्युष्णि हाककुप्प्सूचीभिः शम्म्यन्तुत्त्वा ॥ २ ॥ द्विपदायाश्चतुष्प्पदात्रिपदायाश्चषट्पदाः ॥ व्विच्छन्दायाश्च सच्छन्दाः सूचीभिः शम्म्यन्तुत्त्वा ॥ ३ ॥ सहस्तोमाः सहच्छन्दसऽआवृतः सहप्प्रमाऽऋषयः सप्तदैव्व्याः ॥ पूर्व्वेषाम्पन्थामनुदृश्यधीराऽअन्वालेभिरेरत्थ्योनरश्मीन् ॥ ४ ॥ ॐ *भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ यज्ञाग्र

प्रथमं तु महादेवद्वितीयंचमहेश्वरं ॥ तृतीयशङ्करंप्रोक्तं चतुर्थं वृषभध्वजं ॥ पंचमंशूलपाणिंचषष्ठंकामांगनाशनं । सप्तमंदेवदेवेशं श्रीकंठंचाष्टमंतथा ॥ नवमंचेश्वरं प्रोक्तं दशमंपार्वतीपतिं ॥ रुद्रमेकादशंप्रोक्तं द्वादशं शिवमेवच ॥ द्वादशैतानिनामानि यः पठेत्सुसमाहितः गोघ्नश्चैवकृतघ्नश्चब्रह्महागुरुतल्पगः ॥ स्त्रीबालघातकश्चैवसुरापोवृषलीपतिः ॥ मुच्यते सर्व पापैश्चशिवलोके महीयते ॥ अन्यथाशरणंनास्तित्वमेव शरणंमम ॥ तस्मात्कारुण्यभावेन क्षमस्व परमेश्वर ॥

प्रार्थना ।

दुःख शोकाग्नि संतप्तं संसार भय नाशनं ॥ बहु रोगाकुलं दीनंत्राहित्वंवृषवाहन ॥ वृषस्यवृषणंस्पृष्ट्वाशृंगयोर्मध्यतः शिवं ॥ विलोक्य सहितं देव्या प्रार्थयेत्पूजितेशिवे ॥

---

* रुद्राभिषेक में स्वाहाकार नहीं बोलना ।

तोदूरमुदैविदैवन्तदुसुप्तस्यतथैवैति ॥ दूरङ्गमञ्ज्योतिषाञ्ज्यो
तिरेकन्तन्मेमनः शिवसङ्कल्पमस्तु ॥ ५ ॥ येनकर्म्माण्य
पसोमनीषिणो यज्ञेकृण्वन्तिविदथेषुधीराः ॥ यदपूर्व्वंयक्षम
न्तः प्रजानान्तन्मेमनः शिवसङ्कल्पमस्तु ॥ ६ ॥ यत्प्रज्ञा
नमुतचेतोधृतिश्चयज्ज्योतिरन्तरमृतम्प्रजासु ॥ यस्मान्नऽऋ
तेकिञ्चनकर्म्मक्रियतेतन्मेमनः शिवसङ्कल्पमस्तु ॥ ७ ॥
येनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्व्वम् ॥ येनय
ज्ञस्तायतेसप्तहोतातन्मेमनः शिवसङ्कल्पमस्तु ॥ ८ ॥
यस्मिन्नृचःसामयजूᳬषियस्मिन्प्रतिष्ठितारथनाभाविवाराः ॥
यस्मिँश्चित्तᳬ सर्व्वमोतम्प्रजानान्तन्मेमनः शिवसङ्कल्प
मस्तु ॥ ९ ॥ सुषारथिरश्वानिवयन्मनुष्यान्नेनीयतेभीशु
भिर्व्वाजिनऽइव ॥ हृत्प्रतिष्ठंयदजिरञ्जविष्ठन्तन्मेमनः
शिवसङ्कल्पमस्तु ॥ स्वाहा ॥ १० ॥ ॐ भूः स्वाहा ॥ ॐ
भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ इति रुद्रे प्रथमोऽध्यायः॥१॥
हरिः ॐ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः
स्वाहा॥ सहस्रशीर्षापुरुषःसहस्राक्षः सहस्रपात् ॥ सभूमिᳬसर्व्व
तस्पृत्त्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽएवेदᳬ सर्व्वंयद्
भूतंयच्चभाव्यम् ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति
॥ २ ॥ एतावानस्यमहिमातोज्ज्यायाँश्चपूरुषः ॥ पादोस्य
विश्वा भूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्वऽ

दैत्पुरुषः पादोस्येहाभवत्पुनः ॥ ततोविष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततोव्विराडजायतव्विराजोऽअधिपूरुषः॥ सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः॥५॥ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्ज्यम् ॥ पशूँस्ताँश्चक्रेव्वायव्यानारण्याग्ग्राम्म्याश्चये ॥ ६ ॥ तस्माद्यज्ञात्सर्व्वहुतऽऋचःसामानिजज्ञिरे॥छन्दाᳫंसिजज्ञिरेतस्माद्यजुस्तस्मादजायत ॥ ७ ॥ तस्मादश्वाऽअजायन्तयेकेचोभयादतः॥ गावोहजज्ञिरेतस्मात्तस्माज्जाताऽअजावयः ॥ ८ ॥ तंयज्ञम्बर्हिषिप्प्रौक्षन्पुरुषञ्जातमग्ग्रतः॥ तेनदेवा अयजन्तसाद्ध्याऽऋषयश्चये ॥ ९ ॥ यत्पुरुषंव्यदधुः कतिधाव्यकल्प्पयन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्च्येते ॥ १० ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्न्यः कृतः ॥ ऊरूतदस्ययद्वैश्यः पद्भ्याᳫं शूद्रोऽअजायत ॥११॥ चन्द्रमामनसोजातश्चक्षोः सूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चप्प्राणश्चमुखादग्निरजायत ॥ १२ ॥ नाब्भ्याऽआसीदन्तरिक्षᳫंशीर्ष्णोद्यौः समवर्त्तत ॥ पद्भ्याम्भूमिर्द्दिशः श्रोत्रात्तथालोकाँ२ऽअकल्प्पयन् ॥ १३ ॥ यत्पुरुषेणहविषादेवायज्ञमतन्न्वत ॥ व्वसन्तोऽस्यासीदाज्ज्यङ्ग्रीष्मऽइध्मः शरद्धविः ॥१४॥ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ॥ देवायद्यज्ञन्तन्न्वानाऽअबध्नन्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्मा

णिप्रथमान्यासन् ॥ तेहनाकम्महिमानः सचन्तयत्रपूर्वे
साद्ध्याः सन्तिदेवाः ॥ स्वाहा ॥ १६ ॥ अद्भ्यः सम्भृतः पृथिव्यै
रसाच्चविश्वकर्म्मणः समवर्त्तताग्रे ॥ तस्यत्वष्टाविदधद्रूप
मेतित्तन्मर्त्यस्यदेवत्वमाजानमग्रे ॥ १७ ॥ वेदाहमेतम्पुरुष
म्महान्तमादित्यवर्णन्तमसः परस्तात् ॥ तमेवविदित्वाति
मृत्युमेतिनान्यः पन्थाविद्यतेयनाय ॥ १८ ॥ प्रजापतिश्च
रतिगर्ब्भेऽअन्तरजायमानोबहुधाविजायते ॥ तस्ययोनिम्परि
पश्यन्तिधीरास्तस्मिन्हतस्थुर्भुवनानिविश्वा ॥ १९ ॥
योदेवेभ्यऽआतपतियोदेवानाम्पुरोहितः ॥ पूर्वोयोदेवेभ्यो
जातोनमोरुचायब्राह्मये ॥ २० ॥ रुचम्ब्राह्मञ्जनयन्तोदेवाऽ
अग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽअसन्वशे
॥ २१ ॥ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूप
मश्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽ
इषाण ॥ स्वाहा ॥ २२ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥
ॐ स्वः स्वाहा ॥ इति रुद्रे द्वितीयोऽध्यायः ॥ २ ॥ हरिः
ॐ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥
आशुः शिशानोवृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ॥
सङ्क्रन्दनोनिमिषऽएकवीरः शतꣳ सेनाऽअजयत्साकमिन्द्रः
॥ १ ॥ सङ्क्रन्दनेनानिमिषेणजिष्णुनायुत्कारेणदुश्च्यवने
नधृष्णुना ॥ तदिन्द्रेणजयततत्सहध्वंयुधोनरऽइषुहस्तेनवृ

ष्या ॥ २ ॥ स इषुहस्तैः स निषङ्गिभिर्वशी स ᳪ स्रष्टा स युध ऽइन्द्रो गणेन ॥ स ᳪ सृष्टजित्सोमपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पते परिदीया रथेन रक्षोहामित्राँ २ ऽअपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेद्ध्यविता रथानाम् ॥४॥ बलविज्ञायस्स्थविरः प्रवीरः सहस्वान्वाजी सहमानऽउग्रः ॥ अभिवीरोऽअभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥ ५ ॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्ज्म प्रमृणन्तमोजसा ॥ इम ᳪ सजाताऽअनुवीरयद्ध्वमिन्द्र ᳪ सखायोऽअनु स ᳪ रभद्ध्वम् ॥६॥ अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः । दुश्च्यवनः पृतनाषाडयुद्ध्योऽस्माक ᳪ सेनाऽअवतु प्रयुत्सु ॥ ७ ॥ इन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः ॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् ॥ ८ ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञऽआदित्यानाम्मरुता ᳪ शर्द्धऽउग्रम् ॥ महामनसाम्भुवनच्यवानाङ्घोषो देवानाञ्जयतामुदस्थात् ॥ ९ ॥ उद्धर्षय मघवन्नायुधान्युत्सत्वनाम्मामकानाम्मना ᳪ सि ॥ उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतां यन्तु घोषाः ॥ १० ॥ अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या ऽइषवस्ता जयन्तु ॥ अस्माकं वीराऽउत्तरे भवन्त्वस्माँ २ ऽउ देवाऽअवता हवेषु ॥ ११ ॥ अमीषां चित्तम्प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ॥ अभि

ऐहिनिर्दहहृत्सुशोकैरन्धेनामित्रास्तमसासचन्ताम् ॥ १२ ॥
अवसृष्टापरापतशरव्येब्रह्मसᳪंशिते ॥ गच्छामित्रान्प्रपद्यस्व
मामीषाङ्कञ्चनोच्छिषः ॥ १३ ॥ प्रेताजयतानरऽइन्द्रोवः शर्म्म
यच्छतु ॥ उग्रावः सन्तुबाहवोनाधृष्यायथासथ ॥ १४ ॥
असौयासेनामरुतः परेषामभ्येतिन ऽओजसास्पर्द्धमाना ॥
ताङ्गूहततमसापव्रतेनयथामीऽअन्योऽअन्यन्नजानन् ॥१५॥
यत्रबाणाः सम्पतन्तिकुमाराव्विशिखाऽइव ॥ तन्नऽइन्द्रोबृह
स्पतिरदितिः शर्म्मयच्छतुव्विश्वाहाशर्म्मयच्छतु ॥ १६ ॥
मर्म्माणितेव्वर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ।
उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥स्वाहा ॥
॥ १७ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥
इतिरुद्रे तृतीयोऽध्यायः ॥ ३ ॥

हरिः ॐ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ
स्वः स्वाहा ॥ व्विभ्राड्बृहत्पिबतुसोम्यम्मध्वायुर्द्दधद्यज्ञपता
वविह्रुतम् ॥ व्वातजूतोयोऽअभिरक्षतित्मनाप्रजाः पुपोषपुरु
धाव्विराजति ॥ १ ॥ उदुत्यञ्जातवेदसन्देवंव्वहन्तिकेतवः ॥
दृशेव्विश्वायसूर्य्यम् ॥ १ ॥ येनापावकचक्षसाभुरण्यन्तञ्जना
ऽअनु ॥ त्वंवरुणपश्यसि ॥ ३ ॥ दैव्यावध्वर्यूऽआगतᳪं
रथेनसूर्य्यत्वचा ॥ मध्वायज्ञᳪंसमञ्जाथे ॥ तम्प्रत्नथाऽ
यंवेनश्चित्रन्देवानाम् ॥ ४ ॥ तम्प्रत्नथापूर्वथाविश्वथेमथा

ज्योष्ठतातिम्बर्हिषद ऽस्वर्व्विदम् ॥ प्रतीचीनंव्वृजनन्दोहसेधु
निमाशुञ्जयन्तमनुयासुवर्द्धसे ॥ ५ ॥ अयंव्वेनश्चोदयत्पृश्निगर्भा
ज्ज्योतिर्ज्जरायूरजसोव्विमाने ॥ इममपा ऽसंगमेसूर्य्य
स्याशिशुन्नव्विप्रामतिमारिहन्ति ॥ ६ ॥ चित्रन्देवानामुद
गादनीकञ्चक्षुर्म्मित्रस्यव्वरुणस्याग्नेः ॥ आप्राद्यावापृथिवी
ऽअन्तरिक्ष ऽसूर्य्यऽआत्माजगतस्तस्थुषश्च ॥ ७ ॥ आनऽ
इडाभिर्व्विदथेसुशस्तिव्विश्वानरः सवितादेवऽएतु ॥ अपिय
थायु वानोमत्सथानोव्विश्वञ्जगदभिपित्वेमनीषा ॥ ८ ॥ यद
द्यकच्चवृत्रहन्नुदगाऽअभिसूर्य्य ॥ सर्व्वन्तदिन्द्रतेव्वशे ॥ ९ ॥
तरणिर्व्विश्वदर्शतोज्ज्योतिष्कृदसिसूर्य्य ॥ व्विश्वमाभासिरो
चनम् ॥ १० ॥ तत्सूर्य्यस्यदेवत्वन्तन्महित्वम्मद्ध्याकर्त्तो
र्व्विततऽसञ्जभार ॥ यदेदयुक्तहरितः सुधस्थादाद्रात्रीव्वा
सस्तनुतेसिमस्मै ॥ ११ ॥ तन्मित्रस्यव्वरुणस्याभिचक्षेसू
र्य्योरूपङ्कृणुतेद्योरुपस्थे ॥ अनन्तमन्यद्रुशदस्यपाजःकृष्ण
मन्यद्धरितः सम्भरन्ति ॥ १२ ॥ बण्महाँ२ऽअसिसूर्य्यबडा
दित्यमहाँ२ऽअसि ॥ महस्तेसतोमहिमापनस्यतेद्धादेवमहाँ२ऽ
असि ॥ १३ ॥ बट्सूर्य्यश्रवसामहाँ२ऽअसिसत्रादेवमहाँ२
असि ॥ मन्हादेवानामसुर्य्यः पुरोहितोव्विभुज्ज्योतिरदा
भ्यम् ॥ १४ ॥ श्रायन्तऽइवसूर्य्यंव्विश्वेदिन्द्रस्यभक्षत ॥
वसूनिजातेजनमानऽओजसाप्रतिभागन्नदीधिम ॥ १५ ॥

अद्यादेवाऽउदितासूर्यस्यनिरᳬहसः पिपृतानिरवद्यात् ॥ तन्नो मित्रोव्वरुणो मामहन्तामदितिसिन्धुः पृथिवीऽउतद्यौः॥१६॥ आकृष्णेनरजसाव्वर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्य येनसवितारथेनादेवोयातिभुवनानिपश्यन् ॥ स्वाहा ॥ १७ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ इति रुद्रे चतुर्थोऽध्यायः ॥४॥

*हरिः ॐ॥ ॐ भूः स्वाहा॥ ॐ भुवः स्वाहा॥ ॐ स्वः स्वाहा॥ ॐ नमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥ बाहुब्भ्या मुततेनमः स्वाहा॥ १॥ ॐयातेरुद्रशिवातनूरघोरापापकाशिनी तयानस्तन्न्वाशन्तमयागिरिशन्ताभिचाकशीहि स्वाहा॥ २ ॥ ॐ यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे ॥ शिवाङ्गिरित्रता ङ्कुरुमाहिᳬसीः पुरुषञ्जगत् स्वाहा ॥ ३ ॥ ॐ शिवेनव्वच सात्वागिरिशाच्छावदामसि॥ यथानः सर्व्वमिज्जगदयक्ष्मᳬ सुमनाऽअसत् स्वाहा ॥ ४ ॥ ॐ अद्ध्यवोचदधिवक्ताप्रथमो दैव्व्योभिषक् ॥ अहींश्चसर्वाञ्जम्भयन्त्सर्व्वाश्च यातुधान्न्यो धराचीः परासुव स्वाहा ॥ ५ ॥ ॐ असौयस्ताम्रोअरुणऽ उतबभ्रुः सुमंगल ॥ येचैनᳬ रुद्राऽअभितादिक्षुश्रिताः सह स्रशोवैषाᳬहेडऽईमहे स्वाहा ॥ ६ ॥ ॐ असौयोवसर्पतिनी

---

*रुद्राभिषेक में शतरुद्री ६४ पेजमें से पाठ करना यहां स्वाहा कारहै सो ध्यान में रहे।

लर्ग्रीवोविलोहितः ॥ उतैनंगोपाऽअदृश्रन्नदृश्रन्नुदहार्य्यः सदृष्टोमृडयातिनः स्वाहा ॥ ७ ॥ ॐ नमोस्तुनीलग्रीवाय सहस्राक्षायमीढुषे ॥ अथोयेऽअस्यसत्त्वानोहन्तेभ्योकरन्नमः स्वाहा॥ ८ ॥ ॐ प्रमुञ्चधन्न्वनस्त्वमुभयोरार्त्न्योर्ज्ज्याम् ॥ याश्चतेहस्तऽइषवः परातामगवोव्वप स्वाहा ॥ ९ ॥ ॐ विज्ज्यन्धनुः कपर्दिनोव्विशल्ल्योबाणवाँ२उत ॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषंगधिः स्वाहा ॥ १० ॥ ॐ यातेहेतिर्म्मीढुष्टमहस्तेबभूवतेधनुः ॥ तयास्म्मान्विश्वतस्त्वमयक्ष्मयापरिभुज स्वाहा ॥ ११ ॥ ॐ परितेधन्न्वनोहेतिरस्मान्न्वृणक्तुविश्वतः अथोयऽइषुधिस्तवारेऽअस्म्मन्निधेहितम् स्वाहा ॥ १२ ॥ ॐ अवतत्यधनुष्ट्वꣳ सहस्राक्षशतेषुधे ॥ निशीर्य्यशल्ल्यानाम्मुखा शिवोनः सुमनाभव स्वाहा ॥ १३ ॥ ॐ नमस्तऽआयुधाया नातताय धृष्णवे ॥ उभाब्भ्यामुततेनमोबाहुब्भ्यान्तवधन्न्वने स्वाहा ॥ १४ ॥ ॐ मानोमहान्तमुतमानोऽअर्ब्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोव्वधीः पितरम्मोतमातरम्मानः प्प्रियास्तन्न्वोरुद्ररीरिषः स्वाहा ॥ १५ ॥ ॐ मानस्तोके तनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्रुद्रभामिनोव्वधीर्हविष्म्मन्तः सदमित्त्वाहवामहे ॥ स्वाहा ॥ १६ ॥ ॐ नमोहिरण्यबाहवे सेनान्न्येदिशाञ्चपतयेनमः स्वाहा ॥ ॐ नमोव्वृक्षेब्भ्योहरिकेशेब्भ्य पशूनाम्पतयेनमः

स्वाहा ॥ ॐ नमः शष्पिञ्जरायत्विषीमतेपथीनाम्पतयेनमः स्वाहा ॥ ॐ नमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमः स्वाहा ॥ ॥ १७ ॥ ॐ नमो बभ्लुशाय । व्याधिनेन्नानाम्पतयेनमः स्वाहा ॥ ॐ नमोभवस्यहेत्यैजगताम्पतयेनमः स्वाहा॥ ॐनमोरुद्रायाततायिनेक्षेत्राणाम्पतयेनमः स्वाहा॥ ॐ नमः सूतायाहन्त्यैवनानाम्पतयेनमः स्वाहा ॥ १८ ॥ ॐ नमोरोहिताय । स्थपतयेवृक्षाणाम्पतयेनमः स्वाहा ॥ ॐ नमोभुवन्तयेवारिवस्कृतायौषधीनाम्पतयेनमः स्वाहा ॥ ॐ नमोमन्त्रिणेवाणिजायकक्षाणाम्पतयेनमः स्वाहा ॥ ॐ नमउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्पतयेनमः स्वाहा ॥१९॥ ॐ नमः कृत्स्नायतया । धावतेसत्त्वनाम्पतयेनमः स्वाहा ॥ ॐ नमः सहमानायनिव्याधिनऽआव्याधिनीनाम्पतयेनमः स्वाहा ॥ ॐ नमोनिषंगिणेककुभायस्तेनानाम्पतयेनमः स्वाहा ॥ ॐ नमोनिचेरवेपरिचरायारण्यानाम्पतयेनमः स्वाहा ॥ ॥ २० ॥ ॐ नमोवञ्चते । परिवञ्चतेस्तायूनाम्पतयेनमः स्वाहा ॥ ॐ नमोनिषंगिणऽइषुधिमतेतस्कराणाम्पतयेनमः स्वाहा ॥ ॐ नमः सृकायिभ्योजिघा ं सद्भ्योमुष्णताम्पतयेनमः स्वाहा ॥ ॐ नमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्तानाम्पतये नमः स्वाहा ॥ २१ ॥ ॐ नमऽउष्णीषिणे । गिरिचरायकुलुञ्चानाम्पतयेनमः स्वाहा ॥ नमऽ इषुमद्भ्यो

श्न्वायिभ्यश्चवोनमः स्वाहा ॥ ॐ नमऽआतन्वानेभ्यः
प्रतिदधानेभ्यश्चवोनमः स्वाहा ॥ ॐ नमऽआयच्छद्भ्यो
ऽस्यद्भ्यश्चवोनमः स्वाहा ॥ ॥२२॥ ॐ नमोविसृजद्भ्यो
विध्यद्भ्यश्चवोनमः स्वाहा ॥ ॐनमः स्वपद्भ्यो जाग्रद्भ्य
श्चवोनमः स्वाहा ॥ ॐ नमः शयानेभ्यऽआसीनेभ्यश्चवो
नमः स्वाहा ॥ ॐ नमस्तिष्ठद्भ्योधावद्भ्यश्चवोनमः
स्वाहा ॥२३॥ ॐ नमः सभाभ्यः सभापतिभ्यश्चवोनमः
स्वाहा ॥ ॐ नमोश्वेभ्योश्वपतिभ्यश्चवोनमः स्वाहा ॥
ॐ नमऽआव्याधिनीभ्योविविध्यन्तीभ्यश्चवो नमः
स्वाहा ॥ ॐनमऽउगणाभ्यस्तृठं०हतीभ्यश्चवोनमःस्वाहा ॥
॥२४॥ ॐ नमोगणेभ्यो गणपतिभ्यश्चवोनमः स्वाहा ॥
ॐ नमोव्रातेभ्योव्रातपतिभ्यश्चवोनमः स्वाहा ॥ ॐनमो
गृत्सेभ्योगृत्सपतिभ्यश्च वोनमः स्वाहा ॥ ॐ नमोविरूपे
भ्योविश्वरूपेभ्यश्चवोनमः स्वाहा ॥ २५ ॥ ॐ नमः
सेनाभ्यः सेनानिभ्यश्चवोनमः स्वाहा ॥ ॐ नमोरथि
भ्योऽअरथेभ्यश्चवोनमः स्वाहा ॥ ॐ नमः क्षत्तृभ्यः सङ्ग्र
हीतृभ्यश्चवोनमः स्वाहा ॥ ॐ नमोमहद्भ्योऽअर्भकेभ्य
श्चवोनमः स्वाहा ॥ २६ ॥ ॐ नमस्तक्षभ्यो । रथकारे
भ्यश्चवोनमः स्वाहा ॥ ॐ नमः कुलालेभ्यः कर्मारेभ्य
श्चवोनमः स्वाहा ॥ ॐ नमोनिषादेभ्य· पुञ्जिष्टेभ्यश्चवोनमः

स्वाहा । ॐ नमः श्वनिभ्योमृगयुभ्यश्चवोनमः स्वाहा ॥२७॥ ॐ नमः श्वभ्यः । श्वपतिभ्यश्चवोनमः स्वाहा । ॐ नमोभवा यचरुद्रायचस्वाहा ॥ ॐ नमः शर्वायचपशुपतयेच स्वाहा । ॐ नमोनीलग्रीवायचशितिकण्ठायच स्वाहा ॥ २८॥ ॐ नमः कपर्दिने । चव्युप्तकेशायच स्वाहा ॥ ॐ नमः सहस्रा क्षायचशतधन्वनेच स्वाहा ॥ ॐ नमोगिरिशयायचशिपि विष्टायच स्वाहा ॥ ॐ नमोमीढुष्टमायचेषुमतेच स्वाहा ॥२९॥ नमो ह्रस्वाय चवामनायच स्वाहा । ॐ नमोबृहतेचवर्षीयसेच स्वाहा ॥ नमोवृद्धायचसवृधेच स्वाहा ॥ ॐ नमोग्र्यायचप्रथ मायच स्वाहा ॥ ॐ नमः आशवे चाजिरायच स्वाहा ॥ ३० ॥ ॐ नमः शीघ्र्यायचशीभ्यायच स्वाहा ॥ ॐ नमः ऊर्म्या यचावस्वन्यायच स्वाहा । ॐ नमोनादेयायचद्वीप्यायच स्वाहा ॥ ३१ ॥ ॐ नमोज्येष्ठायच कनिष्ठायच स्वाहा ॥ ॐ नमः पूर्वजायचापरजायच स्वाहा ॥ ॐ नमोमध्यमाय चापगल्भायच स्वाहा ॥ ॐ नमोजघन्यायचबुध्न्यायच स्वाहा ॥ ३२ ॥ ॐ नमः सोभ्याय चप्रतिसर्यायच स्वाहा ॥ ॐ नमोयाम्यायचक्षेम्यायच स्वाहा ॥ ॐ नमः श्लोक्यायचावसान्यायच स्वाहा । ॐ नमऽउर्वर्यायचख ल्यायच स्वाहा ॥ ३३ ॥ ॐ नमोवन्याय चकक्ष्यायच स्वाहा ॥ ॐ नमः श्रवायचप्रतिश्रवायच स्वाहा ॐ नमऽ

॥ ४० ॥ ॐ नमः शम्भवाय चमयोभवायच स्वाहा ॥ ॐनमः शङ्करायचमयस्करायच स्वाहा ॥ ॐ नमः शिवायचशिवतरायच स्वाहा ॥ ४१ ॥ ॐ नमः पार्य्याय चावार्य्यायच स्वाहा ॥ ॐ नमः प्रतरणायचोत्तरणायच स्वाहा ॥ ॐ नम स्तीर्थ्यायचकूल्यायच स्वाहा ॥ ॐ नमः शष्प्यायचफेन्न्यायच स्वाहा ॥ ४२ ॥ ॐ नमः सिकत्याय चप्रवाह्यायच स्वाहा ॥ ॐ नमः किर्ठ० शिलायचचयणायच स्वाहा ॥ ॐ नमः कपर्दिनेचपुलस्तयेच स्वाहा ॥ ॐ नमऽइरिण्यायचप्रपथ्यायच स्वाहा ॥ ४३ ॥ ॐ नमोव्रज्याय चगोष्ठ्यायच स्वाहा ॥ ॐ नमस्तल्प्यायचगेह्यायच स्वाहा ॥ ॐ नमो हृदय्यायचनिवेष्प्यायच स्वाहा ॥ ॐ नमः काट्यायचगह्वरेष्ठायच स्वाहा ॥ ४४ ॥ ॐ नमः शुष्क्याय चहरित्यायच स्वाहा ॥ ॐ नमः पाꣳसव्यायचरजस्यायच स्वाहा ॥ ॐ नमोलोप्यायचोलप्यायच स्वाहा ॥ ॐ नमऽऊर्व्यायचसूर्म्यायच स्वाहा ॥ ४५ ॥ ॐ नमः पर्णाय चपर्णशदायच स्वाहा ॥ ॐ नमऽउद्गुरमाणायचाभिघ्नतेच स्वाहा ॥ ॐ नमऽआखिदतेचप्राखिदतेच स्वाहा ॥ ॐ नमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमः स्वाहा ॥ ॐ नमोवः किरिकेभ्योदेवानाꣳहृदयेभ्यः स्वाहा ॥ ॐ नमोविचिन्वत्केभ्यो देवानाꣳहृदयेभ्यः स्वाहा ॥ ॐ नमोविक्षिणत्केभ्यो स्वाहा ॥

ॐ नमऽ आनिर्हतेभ्यः स्वाहा ॥ ४६ ॥ द्रापेऽअन्धसस्प
तेदरिद्रन्नीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्भाभेर्म्मारो
ङ्मोचनः किञ्चनाममत् ॥ ४७ ॥ इमारुद्राय । तवसेकप
र्द्दिनेक्षयद्वीराय प्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदे
विश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥ ४८ ॥ यातेरुद्रशि
वातनूः शिवाविश्वाहाभेषजी ॥ शिवारुतस्यभेषजीतयानो
मृडजीवसे ॥ ४९ ॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्य
दुर्म्मतिरघायोः ॥ अवस्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोका
यतनयायमृड ॥ ५० ॥ मीढुष्टमशिवतम । शिवोनः सुम
नाभव । परमेवृक्षऽआयुधन्निधायकृत्तिं वसानऽआचरपिनाक
म्बिभ्रदागहि ॥ ५१ ॥ विकिरिद्रविलोहित । नमस्ते
ऽस्तुभगवः ॥ यास्तेसहस्र ठं० हेतयोन्न्यमस्मन्निवपन्तुताः
॥ ५२ ॥ सहस्राणिसहस्रशोबाह्वोस्तवहेतयः ॥ तासामीशा
नोभगवः पराचीनामुखाकृधि ॥ ५३ ॥ असङ्ख्यातासहस्रा
णि ॥ येरुद्राऽअधिभूम्याम् ॥ तेषा ॅ सहस्रयोजनेवधन्वा
नितन्मसि ॥ ५४ ॥ अस्मिन्महत्यर्णवेन्तरिक्षेभवाऽअधि
तेषा ॅ सहस्रयोजनेवधन्वानितन्मसि ॥ ५५ ॥
नीलग्रीवाः शितिकण्ठादिव ठं० रुद्राऽउपश्रिताः ॥ तेषा ॅ

---

नोट—यहां से प्रत्येक मंत्र में भी कोई १ आहुति देते हैं क्योंकि
इसका क्रम इस प्रकार से है।

सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ५६ ॥ नीलग्रीवाः शिति
क एठाः शर्व्वाऽअधः क्षमाचराः ॥ तेषा ७ सहस्रयोजनेवधन्न्वा
नितन्न्मसि ॥ ५७ ॥ येवृक्षेषु । शष्पिञ्जरानीलग्रीवा
व्विलोहिताः ॥ तेषा ७ सहस्रयोजनेवधन्न्वानितन्न्मसि
॥ ५८ ॥ येभूतानामधिपतयोव्विशिखासः कपर्दिनः ॥ तेषा ७
सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ५९ ॥ येपथाम्पथिरक्षयऽ
ऐलबृदाऽआयुर्य्युधः । तेषा ७ सहस्रयोजनेवधन्न्वानितन्न्म
सि ॥ ६० ॥ येतीर्थानि । प्रचरन्तिसृकाहस्तानिषङ्गिणः ॥
तेषा ७ सहस्रयोजनेवधन्न्वानितन्न्मसि ॥ ६१ ॥ येन्नेषु ।
व्विविद्ध्यन्तिपात्रेषुपिबतोजनान् ॥ तेषा ७ सहस्रयोजनेव
धन्न्वानितन्न्मसि ॥ ६२ ॥ यऽएतावन्तश्चभूया ७ सश्च
दिशोरुद्राव्वितस्थिरे ॥ तेषा ७ सहस्रयोजनेवधन्न्वानित
न्न्मसि ॥ ६३ ॥ नमोस्तु । रुद्रेब्भ्योयेदिवियेषांव्वर्षमि
षवः ॥ तेब्भ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्द
शोद्ध्वाः ॥ तेब्भ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्वि
ष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥ स्वाहा ६४॥ नमो
स्तु । रुद्रेब्भ्योयेन्तरिक्षेयेषांव्वातऽइषवः ॥ तेब्भ्योदशप्प्रा
चीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोद्ध्वाः॥ तेब्भ्योनमोऽ
अस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्ज
म्भेदद्ध्मः ॥ स्वाहा ।६५॥ नमोस्तु । रुद्रेब्भ्योयेपृथिव्व्यां

येषामन्नमिषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्रतीचीर्दं शोदीचीर्दशोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडय न्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ स्वाहा ॥ ६६ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ इति रुद्रे पञ्चमोऽध्यायः ॥ ५ ॥ *

---

* पंचम अध्याय के बाद में इन मंत्रों का पाठ करना ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ हरिः ॐ नमस्ते० ( इत्यारभ्य ) मानस्तोके० ( इतिपर्यन्ताः षोडश मन्त्राः ) ॥ १६ ॥ स्वाहा ॥ एषते० ॥ १७ ॥ अवरुद्र० ॥ १८ ॥ नमस्ते० ॥ १९ ॥ याते० ॥ २० ॥ नतम्विदाथयऽइमाजजानान्यद्युष्माक मन्तरम्बभूव ॥ नीहारेणप्रावृताजल्प्याचासुतृपऽउक्थशासश्च रन्ति ॥ २१ ॥ विश्वकर्माह्यजनिष्टदेवऽआदिद्गन्धर्वोऽअभव द्वितीयः ॥ तृतीयः पिताजनितौषधीनामपाङ्गर्भंव्यदधात्पुरुत्रा ॥ २२ ॥ मीढुष्टम० ॥ २३ ॥ विकिरिद्र० ॥ २४ ॥ सहस्राणि० ॥ २५ ॥ असङ्ख्याता० ॥ २६ ॥ स्वयर्ठ० सोम० ॥ २७ ॥ एषते० ॥ २८ ॥ अवरुद्र० ॥ २९ ॥ भेषजमसि० ॥ ३० ॥ त्र्यम्बकं० ॥ त्र्यम्बकं० ॥ ३१ ॥ एतत्ते० ॥ ३२ ॥ त्र्यायुषं० ॥ ३३ ॥ शिवोनामा० ॥ ३४ ॥ उग्रश्च० ॥ ३५ ॥ अग्निं ठं० हृदये० ॥ ३६ ॥ अग्नेश्लोहितेन० ॥ ३७ ॥ स्वरितनऽइन्द्रो० ॥ ३८ ॥ पयः पृथि- व्यां० ॥ ३९ ॥ विष्णोरराट० ॥ ४० ॥ अग्निर्देवता० ॥ ४१ ॥ द्यौः शान्ति० ॥ ४२ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ ( बाद में वाजश्च मे० अर्चन्तार्च० इन दो अध्याय का पाठ करना )।

ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ हरिः ॐ ॥ व्वय ꣳ सोमव्व्रतेतव मनस्तनूषुबिभ्रतः ॥ प्रजावन्तः सचेमहि ॥ १ ॥ एषते। रुद्रभाग सहस्वस्राम्बि कयातञ्जुषस्वस्वाहैषतेरुद्रभागऽआखुस्तेपशुः ॥ २ ॥ अव रुद्रमदीमह्यवदेवन्त्र्यम्बकम् ॥ यथानोव्वस्यसस्करद्यथानः श्रेयसस्करद्यथानोव्व्यवसाययात् ॥ ३ ॥ भेषजमसि । भेष जङ्गवेश्वायपुरुषायभेषजम् । सुखम्मेषायमेष्यै ॥ ४ ॥ त्र्यम्ब कय्यजामहे । सुगन्धिम्पुष्टिवर्द्धनम् । उर्व्वारुकमिवबन्धना न्मृत्योर्म्मुक्षीयमामृतात् । त्र्यम्बकय्यजामहेसुगन्धिम्पतिवे दनम् । उर्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥ ५ ॥ एतत्ते । रुद्रावसन्तेनपरोमूजवतोतीहि ॥ अवततधन्वापि नाकावसः कृत्तिवासाऽअहि ꣳसन्नः शिवोतीहि ॥६॥ त्र्यायुष ञ्जमदग्नेः कश्यपस्यत्र्यायुषम् ॥ यद्देवेषुत्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥ ७ ॥ शिवोनामासिस्वधितिस्तेपितानमस्तेऽ अस्तुमामाहि ꣳसीः॥ निवर्त्तयाम्म्यायुषेन्नाद्यायप्रजननायरा यस्पोषायसुप्रजास्त्वायसुवीर्य्याय स्वाहा ॥ ८ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥

इति रुद्रे षष्ठोऽध्यायः ॥ ६ ॥

ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ हरिः ॐ ॥ उग्रश्च । भीमश्चध्वान्तश्चधुनिश्च । सास

ह्लाँ श्वाभियुग्वाचव्विक्षिपः॥ स्वाहा॥१॥ अग्निर्ठं० हृदयेनाश
निठं० हृदयाग्रेणपशुपतिङ्कृत्स्नहृदयेनभवंद्यक्ना॥ शर्व्वं
म्मतस्नाभ्यामीशानम्मन्न्युनामहादेवमन्तः पर्शव्व्येनोग्रन्दे
वंव्वनिष्ठु नाव्वसिष्ठहनुः शिङ्गीनिकोश्याभ्याम्॥२॥
उग्रँल्लोहितेन। मित्त्रर्ठं० सौव्वर्य्येनरुद्द्रन्दौर्व्वर्त्येनेन्द्रम्प्रक्री
डेनमरुतोबलेनसाद्ध्यान्प्रमुदा। भवस्यकण्ठ्यर्ठं० रुद्द्रस्या
न्तः पार्श्व्यम्महादेवस्ययकृच्छर्व्वस्यव्वनिष्ठुः पशुपतेः पुरी
तत्॥३॥ लोमभ्यः स्वाहा। लोमभ्यः स्वाहात्वचेस्वाहा
त्वचेस्वाहालोहितायस्वाहालोहितायस्वाहामेदोभ्यः स्वाहा
मेदोभ्यः स्वाहामाᳬंसेभ्यः स्वाहामाᳬंसेभ्यः स्वाहास्ना
वभ्यः स्वाहास्नावभ्यः स्वाहास्थभ्यः स्वाहा स्थभ्यः
स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः स्वाहा॥ रेतसेस्वाहापाय
वेस्वाहा॥४॥ आयासायस्वाहा! प्रायासायस्वाहा संय्या
सायस्वाहा व्वियासायस्वाहोद्यासायस्वाहा॥ शुचेस्वाहाशोच
तेस्वाहाशोचमानायस्वाहाशोकायस्वाहा॥५॥ तपसेस्वाहा।
तप्यतेस्वाहातप्यमानायस्वाहातप्तायस्वाहाघर्म्मायस्वाहा॥
निष्कृत्यैस्वाहाप्रायश्चित्त्यैस्वाहा भेषजायस्वाहा॥६॥ यमा
यस्वाहान्तकायस्वाहामृत्यवेस्वाहा॥ ब्रह्मणेस्वाहाब्ब्रह्महत्या
यैस्वाहाव्विश्वेभ्योदेवेभ्यःस्वाहाद्यावापृथिवीभ्याᳬं स्वाहा॥
स्वाहा॥७॥ ॐ भूः स्वाहा॥ ॐ भुवः स्वाहा॥ ॐ स्वः

स्वाहा ॥ इति रुद्रे सप्तमोऽध्यायः ॥ ७ ॥*

ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ हरिः ॐ ॥ वाजश्च । मेप्रसवश्चमेप्रयतिश्चमेप्रसितिश्चमेधीतिश्चमे क्रतुश्चमे स्वरश्चमे श्लोकश्चमेश्रवश्चमे श्रुतिश्चमेज्ज्योतिश्चमेस्वश्चमेयज्ञेनकल्पन्ताम् ॥ १ ॥ प्राणश्च । मेपानश्चमेव्व्यानश्चमेसुश्चमेचित्तञ्चमऽआधीतञ्च मेवाक्चमेमनश्चमेचक्षुश्चमेश्रोत्रञ्चमेदक्षश्चमेबलञ्चमेयज्ञेन कल्पन्ताम् ॥ २ ॥ ओजश्च । मेसहश्चमऽआत्मचमेतनूश्चमेशर्म्मचमेव्वर्म्मचमेङ्गानिचमेस्थानिचमेपरूᳪंषिचमेशरीराणिचमऽआयुश्चमेजराचमेयज्ञेनकल्पन्ताम् ॥ ३ ॥ ज्यैष्ठ्यञ्च । मऽआधिपत्त्यञ्चमे मन्न्युश्चमेभामश्च मेमश्चमेम्भश्चमेजेमाचमेमहिमाच मेव्वरिमाचमेप्रथिमाचमेव्वर्षिमाचमे द्राघिमाचमेव्वृद्धञ्चमेव्वृद्धिश्च मेयज्ञेनकल्पन्ताम् ॥ स्वाहा ॥ ४ ॥ ( नं० *) ॥ सत्यञ्च । मेश्रद्धाचमेजगच्चमेधनञ्चमेव्विश्वञ्चमेमहश्च मेक्रीडाचमेमोदश्चमेजातञ्चमेजनिष्प्यमाणञ्च मेसूक्तञ्चमेसुकृतञ्चमेयज्ञेनकल्पन्ताम् ॥ ५ ॥ ऋतञ्च ।

---

* जो कोई रुद्रा भिषेक वा हवन में शत रुद्री का पाठ करें वह ६।७ अध्याय का पाठ न करें तथा ६।७ अध्याय का पाठ करने वाले शत रुद्री का पाठ न करें। हवन के लिये नमस्ते १२० पेज में है।

( नं० ) * जिस स्थान पर यह निशान हो वहां नमस्ते के ६६ मंत्र का पाठ करना। पाठ के लिये ६६ मंत्र ६४ पेज में हैं।

मेपृतश्चमेयत्त्मश्चमेनायपश्चमे जीवातुश्चमेदीर्घायुत्वश्चमेनमि
त्रश्चमेमयश्चमे सुखश्चमेशयनश्चमेसूषाश्चमेसुदिनश्चमेयज्ञेनक
ल्पन्ताम् ॥ ६ ॥ यन्ताच । मेधर्ताचमेक्षेमश्चमेधृतिश्चमे
विश्वञ्चमेमहश्चमेसंविच्च मेज्ञात्रश्चमेसूश्चमेप्रसूश्चमेसीर
श्चमेलयश्चमेयज्ञेनकल्पन्ताम् ॥ ७ ॥ शञ्चमेमयश्चमेप्रिय
श्चमेनुकामश्चमेकामश्चमेसौमनसश्चमेभगश्चमेद्रविणञ्चमेभद्र
श्चमेश्रेयश्चमेव्वसीयश्चमेयशश्चमेयज्ञेनकल्पन्ताम्॥ स्वाहा ॥८॥
( नं० ) ॥ ऊर्क्च । मे सूनृताचमेपयश्चमेरसश्चमेघृतञ्चमेमधु
चमेसग्धिश्चमे सपीतिश्चमेकृषिश्चमेवृष्टिश्चमेजैत्रञ्चमऽऔद्भिद्य
श्चमेयज्ञेनकल्पन्ताम् ॥ ९ ॥ रयिश्च । मेरायश्चमेपुष्टञ्चमे
पुष्टिश्चमेविभुचमेप्रभुचमेपूर्णञ्चमेपूर्णतरञ्चमेकुयवञ्चमेक्षितञ्च
मेन्नञ्चमेक्षुच्चमे यज्ञेनकल्पन्ताम् ॥ १० वित्तञ्च । मेवे
द्यञ्चमेभूतञ्चमेभविष्यच्च मेसुगञ्चमेसुपथ्यञ्चमऽऋद्धञ्चमऽऋ
द्धिश्चमेक्लृप्तञ्चमेक्लृप्तिश्चमेमतिश्चमेसुमतिश्चमेयज्ञेनकल्प
न्ताम् ॥ ११ ॥ व्रीहयश्च । मेयवाश्चमेमाषाश्चमेतिलाश्चमेमु
द्गाश्चमेखल्वाश्चमेप्रियङ्गवश्चमेणवश्चमेश्यामाकाश्चमेनीवा
राश्चमेगोधूमाश्चमेमसूराश्चमेयज्ञेनकल्पन्ताम्॥ स्वाहा॥१२॥
( नं० ) ॥ अश्माच । मेमृत्तिकाचमेगिरयश्चमेपर्वताश्चमे
सिकताश्चमेव्वनस्पतयश्चमेहिरण्यञ्चमेयश्चमेश्यामञ्चमेलोहञ्च
मेसीसञ्चमेत्रपुचमेयज्ञेनकल्पन्ताम् ॥ १३ ॥ अग्निश्च ।

मऽआपश्च मेव्वीरुधश्च मऽओषधयश्च मेकृष्टपच्च्याश्च मेकृष्टपच्च्या
श्च मेग्राम्म्याश्च मे पशवऽआरण्ण्याश्च मेव्वित्तञ्च मेव्वित्तिश्च मे भूत
ञ्च मे भूतिश्च मे यज्ञेनकल्प्पन्ताम् ॥ १४ ॥ व्वसुच । मेव्वसति
श्च मेकर्म्म चमेशक्तिश्च मेर्थश्च मऽएमश्च मऽइत्याचमेगतिश्च मेयज्ञे
नकल्प्पन्ताम् ॥ १५ ॥ ( न० ) ॥ अग्निश्च । मऽइन्द्रश्च मे
सोमश्च मऽइन्द्रश्च मे सविताचमऽइन्द्रश्च मे सरस्वतीचमऽइन्द्र
श्च मे पूषाचमऽइन्द्रश्च मे बृहस्प्पतिश्च मऽइन्द्रश्च मे यज्ञेनक
ल्प्पन्ताम् ॥ १६ ॥ मित्त्रश्च । मऽइन्द्रश्च मेव्वरुणश्च मऽ
इन्द्रश्च मेधाताचमऽइन्द्रश्च मेत्त्वष्टाचमऽइन्द्रश्च मेमरुतश्च मऽ
इन्द्रश्च मेव्विश्वे चमेदेवाऽइन्द्रश्च मेयज्ञेनकल्प्पन्ताम् ॥१७।
पृथिवीच । मऽइन्द्रश्च मेन्तरिक्षञ्च मऽइन्द्रश्च मेद्यौश्च मऽइन्द्र
श्च मेसमाश्च मऽइन्द्रश्च मे नक्षत्त्राणिचमऽइन्द्रश्च मेदिशश्च
मऽइन्द्रश्च मेयज्ञेनकल्प्पन्ताम् ॥ स्वाहा ॥ १८ ॥ ( न० )॥
अᳬशुश्च । मेरश्मिश्च मेदाब्भ्यश्च मेधिपतिश्च मऽउपा ᳬ
शुश्च मे न्तर्य्यामिश्च मऽऐन्द्रवायवश्च मे मैत्रावरुणश्च मऽआ
श्विनश्च मेप्रतिप्प्रस्थानश्च मे शुक्क्रश्च मेमन्थी चमेयज्ञेनक
ल्प्पन्ताम् ॥ १९ ॥ आग्रयणश्च । मवैश्वदेवश्च मेध्रुवश्च
मेवैश्वानरश्च मऽऐन्द्राग्ग्नश्च मेमहावैश्वदेवश्च मे मरुत्वतीया
श्च मेनिष्क्केवल्ल्यश्च मेसावित्त्रश्च मे सारस्वतश्च मेपात्क्नी
वतश्च मेहारियोजनश्च मेयज्ञेनकल्प्पन्ताम् ॥ २० ॥ स्रुच

श्च । मेचमसाश्चमे ऽश्यामश्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥ स्वाहा ॥ २० ॥ (न०॥) अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यञ्च मे ऽयश्च मे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥

श्च । मेचमसाश्चमे ऽश्यामश्च मेऽनिवमेद्रोण कलशश्च मेग्रावा णश्चमेधिषवणे चमे पूतभृच्च मऽआधवनीयश्च मेऽवेदिश्च मेवर्हि श्चमेवभृयश्च मेस्वगाकारश्च मेयज्ञेनकल्पन्ताम् ॥ स्वाहा ॥२१॥(न०॥) अग्निश्च । मेघर्मश्च मेऽर्कश्च मेसूर्यश्चमेप्रा णश्चमेश्वमेधश्चमेपृथिवीचमेदितिश्च मेदितिश्चमेद्यौश्चमेऽङ्गु लयःशक्वरयोदिशश्चमेयज्ञेनकल्पन्ताम् ॥ २२ ॥ व्रतञ्च । मऽऋतवश्चमे तपश्चमे संवत्सरश्चमे होरात्रेऽऊर्वष्ठीवे बृहद्र थन्तरेचमेयज्ञेनकल्पन्ताम् ॥ स्वाहा ॥ २३ ॥ ( न० ) ॥ एकाच । मेतिस्रश्चमेतिस्रश्चमेपञ्च चमेपञ्च चमेसप्त चमेसप्त च मेनव चमेनवचमऽएकादशचमऽएकादशच मेत्रयोदशचमेत्र योदशचमेपञ्चदशचमेपञ्चदशच मेसप्तदशचमेसप्तदशचमेन वदशचमेनवदशचमऽएकविंशतिश्चमऽएकविंशतिश्च मेत्रयोविंशतिश्चमेत्रयोविंशतिश्चमेपञ्चविंशतिश्च मेपञ्चविंशतिश्चमेसप्तविंशतिश्चमेसप्तविंशतिश्च मेनवविंशतिश्चमेनवविंशतिश्चमऽएकत्रिंशच्च मऽएकत्रिंशच्चमेत्रयस्त्रिंशच्चमेयज्ञेनकल्पन्ताम् ॥ स्वाहा ॥ ॥ २४ ॥ ( न० ) ॥ चतस्रश्च । मेऽष्टौचमेऽष्टौचमेद्वादशचमे द्वादशचमेषोडशचमेषोडशचमेविंशतिश्च मेविंशतिश्च मेचतुर्विंशतिश्चमेचतुर्विंशतिश्च मेऽष्टाविंशतिश्च मेऽष्टाविंशतिश्च मेद्वात्रिंशच्च मेद्वात्रिंशच्च मे

षट्त्रिꣳ॰शच्चमेषट्त्रिꣳ॰शच्चमेचत्वारिꣳ॰शच्चमेचत्वारि
ꣳ॰शच्चमेचतुश्चत्वारिꣳ॰शच्चमेचतुश्चत्वारिꣳ॰शच्चमेऽष्टाच
त्वारिꣳ॰शच्चमेयज्ञेनकल्पन्ताम् ॥ स्वाहा ॥ २५ ॥
( न० ) ॥ त्र्यविश्च । मेत्र्यवीचमेदित्यवाट्चमेदित्यौहीचमे
पञ्चाविश्चमेपञ्चावीचमेत्रिवत्सश्चमेत्रिवत्साचमे तुर्य्यवाट्चमे तु
र्य्यौहीचमेयज्ञेनकल्पन्ताम् ॥ २६ ॥ पष्ठवाट्च । मेपष्ठौही
चमऽउक्षाचमेवशाचमऽऋषभश्चमेवेहच्चमे नड्वाँश्चमेधेनुश्चमे
यज्ञेनकल्पन्ताम् ॥ स्वाहा ॥ २७ ॥ ( न० ) ॥ वाजाय
स्वाहा । प्रसवायस्वाहापिजायस्वाहाक्रतवेस्वाहावसवेस्वाहा
हर्पतयेस्वाहाह्नेमुग्धायस्वाहामुग्धायवैनꣳ॰शिनायस्वाहा
विनꣳ॰शिनऽआन्त्यायनायस्वाहान्त्यायभौवनायस्वाहाभुवन
स्यपतयेस्वाहाधिपतयेस्वाहाप्रजापतयेस्वाहा ॥ इयन्तेराण्मि
त्राययन्तासियमनऽऊर्ज्जेत्वावृष्ट्यैत्वाप्रजानान्त्वाधिपत्याय
॥ २८ ॥ आयुर्य्यज्ञेन । कल्पताम्प्राणोयज्ञेनकल्पताञ्चक्षु
र्य्यज्ञेनकल्पताꣳ श्रोत्रंयज्ञेनकल्पताम्वाग्यज्ञेनकल्पता
म्मनोयज्ञेनकल्पतामात्मायज्ञेनकल्पताम्ब्रह्मायज्ञेनकल्पता
ञ्ज्योतिर्य्यज्ञेनकल्पताꣳ स्वर्य्यज्ञेनकल्पताम्पृष्ठंयज्ञेनकल्प

---

हवन में मृथम् के स्थान में ꣳ बोलना स के पूर्व में होने से॥
वेद में—अनुस्वार से श ष स ह परे रहते अनुस्वारके स्थान में ꣳ आदेश होता है दीर्घ से परे ह्रस्व और ह्रस्व से परे दीर्घ।

तांयज्ञोयज्ञेनकल्पताम् ॥ स्तोमश्चयजुश्चऽऋक्चसामचबृह च्चरथन्तरञ्च । स्वर्द्देवाऽअगन्मामृताऽअभूमप्प्रजापतेः प्रजाऽ अभूमव्वेट्स्वाहा ॥ स्वाहा ॥ २९ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ इति रुद्रेऽष्टमोध्यायः ॥ ८ ॥

ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ हरिः ॐ ॥ ऋचंव्वाचम्प्रपद्येमनोयजुः प्रपद्येसामप्राणम्प्रप द्येचक्षुः श्रोत्रंप्रपद्ये ॥ व्वागोज÷सहौजोमयिप्राणापानौ ॥ १ ॥ यन्मेछिद्रञ्चक्षुषोहृदयस्यमनसोव्वातितृण्णम्बृहस्प तिर्म्मेतद्दधातु ॥ शन्नोभवतुभुवनस्ययस्पतिः ॥ २ ॥ भूर्भुवः स्व÷ । तत्सवितुर्व्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयो न÷प्रचोदयात् ॥ ३ ॥ कयानश्चित्रऽआभुवदूतीसदावृधः सखा । कयाशचिष्ठयाव्वृता ॥ ४ ॥ कस्त्वा । सत्योमदाना म्मर्ठ०हिष्ठोमत्सदन्धसः ॥ दृढाचिदारुजेव्वसु ॥ ५ ॥ अभीषु णः सखीनामविताजरितॄणाम् ॥ शतम्भवास्यूतिभि÷॥६॥ कयात्वन्नऽऊत्याभिप्रमन्दसेव्वृषन् ॥ कयास्तोतृभ्यऽआभर॥ ॥ ७ ॥ इन्द्रोविश्वस्यराजति ॥ शन्नोऽअस्तुद्विपदेशञ्चतु ष्पदे ॥ ८ ॥ शन्नोमित्त्रः शंव्वरुणः शन्नोभवत्वर्य्यमा ॥ शन्नऽइन्द्रोबृहस्पतिः शन्नोव्विष्णुरुरुक्रमः ॥ ९ ॥ शन्नो व्वात÷। पवता ७ शन्नस्तपतुसूर्य्य÷ ॥ शन्नः कनिक्रद द्देवः पर्जन्न्योऽअभिवर्षतु ॥ १० ॥ अहानिशम्भवन्तुनः शर्ठ०

रात्रीः प्रतिधीयताम् ॥ शन्न इन्द्राग्नीभवतामवोभिः शन्न ऽ
इन्द्रावरुणारातहव्या ॥ शन्न इन्द्रापूषणावाजसातौशमि
न्द्रासोमासुवितायशंय्योः ॥ ११ ॥ शन्नोदेवीरभिष्टयऽआपो
भवन्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ १२ ॥ स्योनापृथिवि
नोभवान्नृक्षरानिवेशनी ॥ यच्छानः शर्म्मसप्रथाः ॥ १३ ॥
आपोहि । ष्ठामयोभुवस्तानऽऊर्जेदधातन ॥ महेरणायचक्षसे
॥ १४ ॥ योव ÷ शिवतमोरसस्तस्यभाजयतेहन ÷ ॥ उशती
रिवमातर ÷ ॥ १५ ॥ तस्माऽअरङ्गमामवोयस्यक्षयायजि
न्वथ ॥ आपोजनयथाचनः ॥१६॥ द्यौः शान्तिरन्तरिक्षꣳ
शान्ति ÷ पृथिवीशान्तिरापः शान्तिरोषधयः शान्ति ÷ ॥
र्व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्मशान्तिः सर्व्वꣳ
शान्तिः शान्तिरेवशान्तिः सामाशान्तिरेधि ॥ १७ ॥ दृतेदृꣳ
हमामित्रस्यमाचक्षुषासर्व्वाणिभूतानिसमीक्षन्ताम् ॥ मित्र
स्याहञ्चक्षुषासर्व्वाणिभूतानिसमीक्षे ॥ मित्रस्यचक्षुषासमीक्षा
महे ॥ १८ ॥ दृतेदृꣳ हमा । ज्योक्तेसन्दृशिजीव्यासंज्योक्ते
सन्दृशिजीव्यासम् ॥ १९ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअ
स्त्वर्चिषे ॥ अन्न्याँस्तेऽअस्म्मत्तपन्तुहेतय ÷ पावकोऽअस्म
भ्यꣳ शिवोभव ॥ २० ॥ नमस्ते । अस्तुविद्युतेनमस्तेस्तन
यित्नवे ॥ नमस्तेभगवन्नस्तुयतः स्व ÷ समीहसे ॥ २१ ॥
यतोयतः समीहसेततोनोऽअभयङ्कुरु ॥ शन्न ÷ कुरुप्रजाभ्यो

भयन्नः पशुभ्य ÷ ॥ २२ ॥ सुमित्त्रियानऽआपऽओषधयः सन्तुदुर्मित्त्रियास्तस्म्मै सन्तुयोस्म्मान्द्वेष्टि यञ्चव्व यन्द्विष्म्मः ॥ २३ ॥ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् ॥ पश्येमशरद ÷ शतञ्जीवेमशरद ÷ शतꣳशृणुयामशरद ÷ शतम्प्रब्ब्रवामशरद ÷ शतमदीनाः स्यामशरद ÷ शतम्भूयश्चशरद ÷ शतात् ॥ स्वाहा ॥ २४ ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ इति रुद्रे शान्त्यध्यायः ॥

अथरुद्रेस्वस्तिप्रार्थनामन्त्राऽध्यायः ॥ हरिः ॐ ॥ स्वस्तिन इन्द्रोवृद्धश्रवाः स्वस्तिन ÷ पूषाव्विश्ववेदाः ॥ स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनोबृहस्पतिर्द्दधातु ॥ १ ॥ ॐ पय ÷ पृथिव्व्याम्पयऽओषधीषुपयोदिव्व्यन्तरिक्षेपयोधाः पयस्वतीः प्प्रदिश ÷ सन्तुमह्यम् ॥ २ ॥ ॐ व्विष्ष्णोरराटमसिव्विष्ष्णोः श्नप्त्रेस्थोव्विष्ष्णोःस्यूरसिव्विष्ष्णोर्ध्रुवोसि॥ वैष्ष्णवमसिव्विष्ष्णवेत्वा ॥ ३ ॥ ॐ अग्ग्निर्देवतावातोदेवतासूर्य्योदेवता चन्द्रमादेवता व्वसवोदेवता रुद्द्रादेवतादित्या देवतामरुतोदेवता व्विश्वेदेवादेवता बृहस्पतिर्देवतेन्द्रोदेवता व्वरुणोदेवता ॥ ४ ॥ ॐ सद्योजातम्प्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेनातिभवेभवस्वमाम्भवोद्भवायनमः ॥ ५ ॥ वामदेवायनमोज्ज्येष्ठायनम ÷ श्रेष्ठायनमोरुद्रायनमः कालायनमः कलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रम

थनाथायनमः सर्वभूतदमनायनमोमनोन्मनायनमः ॥ ६ ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्योनम स्तेअस्तुरुद्ररूपेभ्यः ॥ ७ ॥ तत्पुरुषायविद्महेमहादेवायधी महि ॥ तन्नोरुद्रःप्रचोदयात् ॥ ८ ॥ ईशानः सर्वविद्यानामी श्वरः सर्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमे अस्तुसदाशिवोम् ॥ ९ ॥ ॐ शिवोनामासिस्वधितिस्तेपिता नमस्तेअस्तुमामाहिंस० सीः ॥ निवर्त्तयाम्म्यायुषेन्नाद्यायप्रजन नायरायस्पोषायसुप्रजास्त्वायसुवीर्य्याय ॥ १० ॥ ॐ विश्वा निदेवसवितर्दु रितानिपरासुव ॥ यद्भद्रन्तन्नऽआसुव ॥ ११ ॥ ॐ द्यौः शान्तिरन्तरिक्षठं शान्तिः पृथिवीशान्तिरापःशान्ति रोषधयः शान्तिः ॥ वनस्पतयः शान्तिर्विश्वेदेवाः शान्ति र्ब्रह्मशान्तिः सर्वठं० शान्तिः शान्तिरेवशान्तिः सामाशान्ति रेधि ॥ १२ ॥ ॐ सर्वेषांवाएषवेदाना ॐ रसोयत्सामसर्वेषा मेवैनमेतद्वेदाना ॐ रसेनाभिषिञ्चति ॥ १३ ॥

ॐ आकृष्णेन रजसावर्त मानोनिवेशयन्नमृतंमर्त्यञ्च ॥ हिरण्ययेन सविता रथेन देवोयातिभुवनानिपश्यन् ॥ १ ॥ इमन्देवाऽअसपत्न ठं० सुवध्वम्महते क्षत्रायमहते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय ॥ इममुष्य पुत्रममुष्यै पुत्र मस्यैविशऽएषवोमी राजासो मोस्माकं ब्राह्मणाना ॐ राजा ॥ ॥ २ ॥ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् ॥

अपा ९ रेता ९ सिजिन्वति ॥ ३ ॥ उद्बुध्यस्वाग्ने प्रतिया गृहित्व मिष्टापूर्ते स ठं० सृजेथामयञ्च ॥ अस्मिन्त्सधस्थेऽ अध्युत्तरस्मिन्विश्वे देवायजमानश्चसीदत ॥ ४ ॥ बृहस्पतेऽअ- तियदर्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऋत प्रजाततदस्मासुद्रविणंधेहिचित्रम् ॥ ५ ॥ अन्नात्परिस्रुतोरसं ब्रह्मणाव्यपिवत्क्षत्रंपयः सोमं प्रजापतिः ॥ ऋतेनसत्यमिन्द्रि यंविपान ठं० शुक्रमन्धसऽइन्द्रस्येन्द्रियमि दंपयोमृतमधु ॥६॥ शन्नो देवी रभिष्टयऽआपोभवन्तु पीतये ॥ शंयोरभिस्त्रवन्तुनः ॥ ७ ॥ कयानश्चित्रऽ आभुवदूती सदावृधः सखाकया ॥ शचिष्ठयावृती ॥ ८ ॥ केतुंकृण्वन्नकेतवेपेशोमर्याऽअपेशसे समुषद्भिरजायथाः॥ ॐ ब्रह्मामुरारि स्त्रिपुरान्तकारी भानुश्श- शीभूमिसुतोबुधश्च ॥ गुरुश्चशुक्रश्शनि राहु केतवस्सर्वेग्रहः शान्ति करा भवन्तु ॥ इतिस्वस्ति प्रार्थनामंत्राऽध्यायः ॥ ॐ शान्तिः शान्तिः सुशान्तिर्भवतु सर्वारिष्टशान्तिर्भवतु ॥ अनेन रुद्राभिषेककर्मणा कृतेन श्रीभवानीशङ्करमहारुद्रः प्रीयतां न मम ॥ ॐ सांब सदाशिवार्पणमस्तु ॥

अभिषेकान्ते ॐ भूर्भुवः स्वः श्रीभवानीशङ्करदेवताभ्यो नमः आचमनं हस्तप्रक्षालनं च सम० ॥ वस्त्रम्—ॐतस्मा- द्यज्ञात्सर्वहुतऋचः० ॐ भू० श्री० नमः वस्त्रं सम० ॥ यज्ञोपवीतम्—ॐ तस्मादश्वा० ॐभू० श्री० नमः यज्ञोपवीतं

सम० ॥ गन्धम्—ॐ तंय्यज्ञम्म० ॐ भू० श्री० नमः गन्धं मम० ॐ भू० श्री० नमः अक्षतान्सम० ॥ पुष्पाणि—ॐ यत्पुरुषं० ॐ भू० श्री० नमः पुष्पाणि सम० ॥ बिल्वपत्रार्पणम्—ॐ शिवोभवप्रजाभ्योमानुषीभ्यस्त्वमङ्गिरः । मद्या चापृथिवीऽअभिशोचीर्म्मान्तरिक्षम्माव्वनस्पतीन् ॥ ॐभू० श्री० नमः बिल्वपत्राणि सम० ॥ ॐ भू० श्री० नमः सौभाग्यद्रव्याणि सम० ॥ धूपम्—ॐ ब्राह्मणो० ॐभू० श्री० नमः धूपमाघ्रापयामि ॥ दीपम्—ॐचन्द्रमामनसो० ॐ भू० श्री० नमः घृतपूरितनीराजनदीपं दर्शयामि ॥ नैवेद्यम्—ॐ नाभ्याऽआ० ॐप्राणायस्वाहा ॐअपानायस्वाहा ॐव्यानायस्वाहा ॐउदानायस्वाहा ॐसमानायस्वाहा ॐ० भू० श्री० नमः नैवेद्यं सम० ॥ ॐ० भू० श्री० नमः मध्ये २ पानीयं उत्तरापोशनार्थे किंचिन्नैवेद्यं सम० हस्तप्रक्षालनं मुख प्रक्षालनं आचमनीयं करोद्वर्तनार्थे चन्दनं च सम० ॥ मुखवासार्थे फलताम्बूलम्—ॐयत्पुरुषेण० ॐभू०' श्री० नमः ताम्बूलं सम० ॥ ॐभू० श्री० नमः हिरण्यदक्षिणां सम०॥ आर्तिक्यम् ॥ ६४ पृष्ट में॥ ततः शिवपार्षदपूजां कृत्वा विशेषार्घ्यः—रक्ष रक्ष महादेव रक्ष त्रैलोक्यरक्षक । भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥ वरद त्वं वरं देहि वांछितं वांछितार्थद । अनेन सफलार्घ्येण फलदोऽस्तु

सदा मम ॥ ॐ भू० श्री० नमः विशेषार्घ्यं सम० ॥ प्रार्थना—भूत्यालेपनभूषितः प्रविलसन्नेत्राग्निदीपाङ्कुरः कण्ठे एकगपुष्पदामसुभगो गङ्गाजलैः पूरितः । ईषच्चाप्रजटाऽग्रपल्लवयुतो न्यस्तो जगन्मंडपे शम्भुर्मङ्गलकुम्भतामुपगतो भूयास्सतां श्रेयसे ॥ ॐ भू० श्री० नमः प्रार्थना सम० ॥ क्षमापनम्—आवाहनं न जानामि न जानामि तवार्चनम् । पूजां चैव न जानामि क्षमस्व परमेश्वर ॥ अर्पणम्—अनेनावाहनादि षोडशोपचारैः अन्योपचारैश्च यथाज्ञानेन यथामिलितोपचारद्रव्यैः कृतेन पूजनाख्येनकर्मणा ॐ भूर्भुवः स्वः श्रीभवानीशङ्करदेवताः प्रीयन्तां न मम ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥

## ॥ श्री शिव महिमस्तोत्र प्रारम्भः ॥

महिम्नः पारं ते परम विदुषोयद्यसदृशी । स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः ॥ अथावाच्यः सर्वः स्वमति परिणामावधिगृणन् । ममाप्येष स्तोत्रे हरनिरपवादः परिकरः ॥ १ ॥ अतीतः पन्थानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्यायं चकितमभिधत्तेश्रुतिरपि । सकस्य स्तोतव्यः कतिविधगुणःकस्य विषयः पदेत्वर्वाचीने पतति न मनः कस्य न वचः ॥ २ ॥ मधुस्फीता वाचः परमममृतं निर्मितवतस्तव ब्रह्मन् किं वागपिसुरगुरोर्विस्मयपदम् । ममत्वेतां वाणीं

गुणकथन पुण्ये न भवतः पुनामीत्यर्थेऽस्मिन्पुरमथनबुद्धिर्व्य-
वसिता ॥ ३ ॥ तवैश्वर्यंयत्तज्जगदुदयरक्षाप्रलयकृत्त्रयीवस्तु
व्यस्तं तिसृषु गुणभिन्नासुतनुषु ॥ अभव्यानामस्मिन्वरद
रमणीयामरमणींविहंतुं व्याक्रोशीं विदधतइहैकेजडधियः॥ ४॥
किमीहः किंकायः सखलुकिमुपायस्त्रिभुवनं किमाधारोधाता
सृजतिकिमुपादान इति च ॥ अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थोह
तधियः कुतर्कोऽयंकांश्चिन्मुखरयतिमोहायजगतः ॥ ५ ॥
अजन्मानोलोकाः किमवयववंतोऽपिजगतामधिष्ठातारंकिंभ
वविधिरनादृत्यभवति ॥ अनीशोवाकुर्याद्भुवनजननेकः परि
करोयतोमंदास्त्वांप्रत्यमरवरसंशेरतइमे ॥ ६ ॥ त्रयीसांख्यं
योगः पशुपतिमतंवैष्णवमिति प्रभिन्नेप्रस्थानेपरमिदमदः
पथ्यमितिच रुचीनांवैचित्र्यादृजुकुटिलनानापथजुषांनृणामे
कोगम्यस्त्वमसिपयसामर्णवइव ॥ ७ ॥ महोक्षः खट्वांगंपर
शुरजिनंभस्मफणिनः कपालंचेतीयत्तववरदतंत्रोपकरणं ॥
सुरास्तांतामृद्धिंदधतितुभवद्भ्रूप्रणिहितांनहिस्वात्मारामं विष
यमृगतृष्णाभ्रमयति ॥ ८ ॥ ध्रुवंकश्चित्सर्वंसकलमपरस्त्वध्रु
वमिदं परोध्रौव्याध्रौव्येजगतिगदतिव्यस्तविषये ॥ समस्तं-
प्येतस्मिन्पुरमथनतैर्विस्मितइवस्तुवन्जिह्रेमित्वां नखलुननु
धृष्टामुखरता ॥ ९ ॥ तवैश्वर्यंयत्नाद्यदुपरिविरिंचोहरिरधः
परिच्छेत्तुं यातावनलमनलस्कंधवपुषः ॥ ततोभक्तिश्रद्धाभर

गुरुगृणद्भ्यांगिरिशयत्स्वयंतस्थेताभ्यांतवकिमनुवृत्तिर्नफलति
॥ १० ॥ अयत्नादापाद्यत्रिभुवनमवैरव्यतिकरंदशास्योय
द्बाहूनभृतरणकंडूपरवशान्शिरः पद्मश्रेणीरचितचरणांभो
रुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुरहरविस्फूर्जितमिदम् ॥ ११ ॥
अमुष्यत्वत्सेवासमधिगतसारंभुजवनं बलात्कैलासेपित्वदधि
वसतौविक्रमयतः ॥ अलभ्यापातालेऽप्यलसचलितांगुष्ठशिर
सि प्रतिष्ठात्वय्यासीद्ध्रुवमुपचितोमुह्यतिखलः ॥ १२ ॥
यदृद्धिंसुत्राम्णोवरदपरमोच्चैरपिसतीमधश्चक्रे बाणः परिजनवि-
धेयत्रिभुवनः ॥ नतच्चित्रंतस्मिन्वरिवसितरि त्वच्चरणयोर्न
कस्याप्युन्नत्यैभवति शिरसस्त्वय्यवनतिः ॥ १३ ॥ अकांड
ब्रह्मांडक्षयचकितदेवासुरकृपा विधेयस्यासीद्यस्त्रिनयनविषंसंहृ-
तवतः ॥ सकल्माषः कंठेतवनकुरुते न श्रियमहो विकारोऽपि
श्लाघ्यो भुवनभयभंगव्यसनिनः ॥ १४ ॥ असिद्धार्थानैव
क्वचिदपिसदेवासुरनरेनिवर्त्तंते नित्यंजगतिजयिनोयस्यविशि
खाः ॥ सपश्यन्नीशत्वामितरसुरसाधारणमभूत्स्मरः स्मर्त्त
व्यात्मानहिवशिषुपथ्यः परिभवः ॥ १५ ॥ महीपादाघाता
द्व्रजतिसहसासंशयपदं पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रह
गणम् ॥ मुहुर्द्यौर्दौस्थ्यंयात्यनिभृत जटाताडिततटाजगद्रक्षा
यैत्वं नटसिननुवामैवविभुता ॥ १६ ॥ वियद्व्यापी तारागण
गुणितफेनोद्गमरुचिः प्रवाहोवारांयः पृषतलघुदृष्टः शिरसिते ॥

जगद्द्वीपाकारंजलधिवलयंतेन कृतमित्यनेनैवोन्नेयंधृतमहिम
दिव्यंतववपुः ॥ १७ ॥ रथः क्षोणीयं ताशतधृतिरगेंद्रोधनु
रथोरथांगेचन्द्रार्कौ रथचरणपाणिः शरइति ॥ दिधक्षोस्तेको-
यंत्रिपुरतृणमाडम्बरविधिर्विधेयैः क्रीडंत्योनखलुपरतंत्राः प्रभु
धियः ॥ १८ ॥ हरिस्तेसाहस्रं कमलबलिमाधाय पदयोर्य-
देकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ॥ गतोभक्त्युद्रेकः परि-
णतिमसौचक्रवपुषा त्रयाणां रक्षायैत्रिपुरहरजागर्तिजगताम् ॥
॥ १९ ॥ क्रतौसुप्ते जाग्रत्त्वमसि फलयोगेक्रतुमतां क्व कर्म
प्रध्वस्तंफलतिपुरुषाराधनमृते ॥ अतस्त्वां सम्प्रेक्ष्यक्रतुषुफल
दानप्रतिभुवंश्रुतौ श्रद्धांबद्ध्वादृढपरिकरः कर्मसुजनः । २०॥
क्रियादक्षोदक्षः क्रतुपतिरधीशस्तनुभृतामृषीणामार्त्विज्यंशर-
णदसदस्याः सुरगणाः ॥ क्रतुभ्रेषस्त्वत्तः क्रतुफलविधानव्य-
सनिनो ध्रुवंकर्तुः श्रद्धाविधुरमभिचारायहिमखाः ॥ २१ ॥
प्रजानाथंनाथप्रसभमभिकंस्वांदुहितरं गतंरोहिद्भूतां रिरमयि
षुमृष्यस्यवपुषा ॥ धनुष्पाणेर्यातंदिवमपिसपत्राकृतममुं त्रसं
तंतेऽद्यापित्यजतिनमृगव्याधरभसः ॥ २२ ॥ स्वलावण्याशं
साधृतधनुषमह्नायतृणवत्पुरः प्लुष्टं दृष्ट्वापुरमथनपुष्पायुधम
पि ॥ यदिस्त्रैणंदेवीयमनिरतदेहार्धघटनादवैति त्वामद्धावत
वरदमुग्धायुवतयः ॥ २३ ॥ श्मशानेष्वाक्रीडाः स्मरहरपिशा-
चाः सहचराश्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः ॥

अमंगल्य शीलंतवभवतुनामैवमखिलंतथापिस्मर्तॄणांवरदपर
मंमंगलमसि ॥ २४ ॥ मनः प्रत्यक्चित्तेसविधमवधायात्तम-
रुतः प्रहृष्यद्रोमाणः प्रमदसलिलोत्संगितदृशः ॥ यदालोक्या
ह्लादंह्रदइव निमज्यामृतमयेदधत्यंतस्तत्त्वं किमपि यमिन
स्तत्किलभवान् ॥ २५ ॥ त्वमर्कस्त्वंसोमस्त्वमसिपवनस्त्वंहु
तवहस्त्वमापस्त्वंव्योमत्वमुधरणिरात्मात्वमितिच। परिच्छि
न्नामेवंत्वयिपरिणताबिभ्रतिगिरंनवि द्मस्तत्तत्त्वंवयमिहतुयत्त्वं
न भवसि ॥ २६ ॥ त्रयींतिस्रोवृत्तीस्त्रिभुवनमथोत्रीनपि सुरा
नकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति। तुरीयंतेधामध्वनि
भिरवरुन्धानमणुभिः समस्तव्यस्तं त्वांशरणदगृणात्योमिति
पदम् ॥ २७ ॥ भवः शर्वोरुद्रः पशुपतिरथोग्रः सहमहांस्तथा
भीमेशानाविति यदभिधानाष्टकमिदं ॥ अमुष्मिन्प्रत्येकंप्रवि
चरतिदेवश्रुतिरपिप्रियायास्मैधाम्नेप्रणिहितनमस्योस्मिभवते॥
॥ २८ ॥ नमोनेदिष्ठायप्रियदवदविष्ठायचनमोनमः क्षोदिष्ठा
यस्मरहरमहिष्ठाय च नमः ॥ नमोवर्षिष्ठाय त्रिनयनयविष्ठाय
चनमोनमः सर्वस्मैतेतदिदमितिशर्वायचनमः ॥ २९ ॥ बहु
लरजसेविश्वोत्पत्तौभवाय नमोनमः प्रबलतमसेतत्संहारेहराय
नमोनमः ॥ जनसुखकृतेसत्त्वोत्पत्तौमृडायनमोनमः प्रमहसिप
देनिस्त्रैगुण्येशिवायनमोनमः ॥ ३० ॥ कृशपरिणतिचेतः
क्लेशवश्यंक्वचेदंक्वचतव गुणसीमोल्लंघिनीशश्वदृद्धिः ॥ इति

चकितममंदीकृत्य मांमक्तिराधाद्वरदचरणयोस्तेवाक्यपुष्पोप
हारम् ॥ ३१ ॥ असितगिरिसमंस्यात्कज्जलंसिंधुपात्रेसुरतरुवर
शाखालेखनी पत्रमुर्वी ॥ लिखतियदिगृहीत्वा शारदासर्वका
लंतदपितवगुणानामीशपारंनयाति ॥ ३२ ॥ असुरसुरमुनी
द्रैरर्चितस्येंदुमौलेर्ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य ॥ सक
लगुणवरिष्ठः पुष्पदंताभिधानो रुचिरमलघुवृत्तैः स्तोत्रमेतच्च
कार ॥ ३३ ॥ अहरहरनवद्यंधूर्जटेः स्तोत्रमेतत्पठतिपरमभ-
क्त्या शुद्धचित्तः पुमान्यः ॥ सभवतिशिवलोके रुद्रतुल्यस्त
दात्मा प्रचुरतरधनायुः पुत्रवान्कीर्तिमांश्च ॥ ३४ ॥ महेशान्ना
परोदेवोमहिम्नोनापरास्तुतिः ॥ अघोरान्नापरोमंत्रोनास्तितत्त्वं
गुरोः परम् ॥ ३५ ॥ दीक्षादानं तपस्तीर्थंज्ञानंयज्ञादिकाः
क्रियाः ॥ महिम्नस्तवपाठस्य कलांनार्हंतिषोडशीं ॥ ३६ ॥
कुसुमदशननामासर्वगंधर्वराजः शिशुशशिधरमौलेर्देवदेवस्य
दासः ॥ सखलुनिजमहिम्नोभ्रष्ट एवास्यरोषात्स्तवनमिदम
कार्षीद्दिव्यदिव्यंमहिम्नः ॥ ३७ ॥ सुरवरमुनिपूज्यंस्वर्गमो
क्षैकहेतुं पठतियदिमनुष्यः प्रांजलिर्नान्यचेताः ॥ व्रजतिशि
वसमीपंकिन्नरैः स्तूयमानः स्तवनमिदममोघं पुष्पदंतप्रणीतं ॥
॥ ३८ ॥ श्रीपुष्पदंतमुखपंकजनिर्गतेन स्तोत्रेणकिल्बिषहरेण
हरप्रियेण ॥ कंठस्थितेनपठितेनसमाहितेनसुप्रीणितोभवति
भूतपतिर्महेशः ॥ ३९ ॥ इत्येषावाङ्मयीपूजा श्रीमच्छंकर

पादयोः ॥ अर्पितातेनमेदेवः प्रीयतांचसदाशिवः ॥ ४० ॥ इति श्रीपुष्पदंत गंधर्वराजविरचितं श्रीशिवमहिमाख्यस्तोत्रं सम्पूर्णम् ॥ ॐ श्रीसांब सदाशिवार्पणमस्तु ॥ शुभमस्तु ॥

## शिव पंचाक्षर स्तोत्रम् ॥

नागेन्द्रहाराय त्रिलोचनाय भस्माङ्गरागाय महेश्वराय । नित्याय शुद्धाय दिगम्बराय तस्मै "न" काराय नमः शिवाय ॥ १ ॥ मन्दाकिनीसलिलचन्दन चर्चिताय नन्दीश्वर प्रमथनाथमहेश्वराय मन्दारपुष्पबहुपुष्पसुपूजिताय तस्मै "म" कारायनमः शिवाय ॥ २ ॥ शिवाय गौरी वदनाब्जवृन्दसूर्याय दक्षाध्वरनाशकाय ॥ श्रीनीलकंठाय वृषध्वजाय तस्मै "शि" काराय नमः शिवाय ॥ ३ ॥ वसिष्ठकुम्भोद्भवगौतमार्य मुनीन्द्रदेवार्चितशेखराय ॥ चन्द्रार्कवैश्वानरलोचनाय तस्मै "व" काराय नमः शिवाय । ४ ॥ यक्षस्वरूपाय जटाधराय पिनाकहस्ताय सनातनाय ॥ दिव्याय देवाय दिगम्बराय तस्मै "य" काराय नमः शिवाय ॥ ५ ॥ पञ्चाक्षरमिदं पुण्यंयःपठेच्छिवसन्निधौ ॥ शिवलोक मवाप्नोति शिवेन सहमोदते ॥६॥ इति श्रीमच्छंकराचार्य विरचितं शिवपंचाक्षर स्तोत्रम् संपूर्णम् ।

## शिव ताण्डव स्तोत्रम् ॥

जटाटवीगलज्जलप्रवाहपावितस्थले गलेऽवलम्ब्यलम्बितां भुजङ्गतुङ्गमालिकाम् । डमड्डमड्डमड्डमन्निनादवड्डम

वेयं चकार चण्ड ताण्डवं तनोतु नः शिवः शिवम् ॥ १ ॥ जटा कटाहसम्भ्रम भ्रमन्नि लिम्पनिर्झरी विलोलवीचिवल्लरी विराज मानमूर्द्धनि। धगद्धगद्धगज्ज्वलल्ललाटपट्टपावके किशोरचन्द्र शेखरे रतिः प्रतिक्षणंमम ॥ २ ॥ धराधरेन्द्रनन्दिनी विलास बन्धु बन्धुरस्फुरद्दिगन्त सन्तति प्रमोदमान मानसे । कृपा कटाक्ष धोरणी निरुद्ध दुर्धरापदिक्वचिद्दिगम्बरे मनोविनोदमे तुवस्तुनि ॥ ३ ॥ जटाभुजंग पिङ्गलस्फुरत्फणा मणिप्रभा कदम्ब कुंकुमद्रवप्रलिप्तदिग्वधूमुखे । मदान्धसिन्धुरस्फुरत्त्व गुत्तरीयमेदुरे मनो विनोदमद्भु तं बिभर्तु भूतभर्तरि ॥ ४ ॥ सहस्रलोचन प्रभृत्यशेषलेखशेखर प्रसूनधूलिधोरणी विधूसरा- ङ्घ्रिपीठभूः । भुजंगराजमालया निबद्धजाटजूटकः श्रियैचि रायजायतां चकोरबन्धुशेखरः ॥ ५ ॥ ललाटचत्वरज्वल द्धनञ्जयस्फुलिंगभा निपीतपञ्चसायकं नमन्निलिम्पनायकम्। सुधामयूखलेखया विराजमानशेखरं महाकपालिसम्पदे शिरो जटालमस्तुनः ॥ ६ ॥ करालभालपट्टिका धगद्धगद्धगज्ज्वल द्धनञ्जयाहुतीकृतप्रचण्डपञ्चसायके। धराधरेन्द्रनन्दिनी कुचाग्र चित्रपत्रक प्रकल्पनैकशिल्पिनि त्रिलोचने रतिर्मम ॥७॥ नवी- नमेघमण्डलीनिरुद्धदुर्धरस्फुरत्कुहूनिशीथिनीतमः प्रबन्धबद्ध कन्धरः। निलिम्पनिर्झरीधरस्तनोतुकृत्तिसिन्धुरः कलानिधान बन्धुरः श्रियंजगद् धुरन्धुरः ॥ ८ ॥ प्रफुल्लनीलपङ्कजप्रपञ्च

कालिमप्रभावलम्बिकण्ठकन्दलीरुचिप्रबद्धकन्धरम् ॥ स्मर
च्छिदं पुरच्छिदं भवच्छिदं मखच्छिदं गजच्छिदांधकच्छिदं
तमन्तकच्छिदं भजे ॥९॥ अखर्व सर्व मंगला कलाकदम्बमञ्जरी
रसप्रवाह माधुरी विजृम्भणा मधुव्रतम् ॥ स्मरान्तकं पुरान्तकं
भवान्तकं मखान्तकं गजान्तकान्ध कान्तकं तमन्तकान्तकं
भजे ॥ १० ॥ जयत्वदभ्रविभ्रम भ्रमद्भुजंग मश्वसद्विनिर्गम
त्क्रमस्फुरत्करालभालहव्यवाट् ॥ धिमिद्धिमिद्धिमिध्वनन्मृ
दंगतुंग मंगलध्वनिक्रमप्रवर्तितप्रचण्ड ताण्डवः शिवः ॥
॥ ११ ॥ दृषद्विचित्रतल्पयोर्भुजंग मौक्तिकस्रजोर्गरिष्ठरत्न
लोष्टयोः सुहृद्विपक्षपक्षयोः ॥ तृणारविन्द चक्षुषोः प्रजामही
महेन्द्रयोः समप्रवृत्तिकः कदा सदाशिवं भजाम्यहम् ॥१२॥
कदानिलिम्प निर्झरी निकुञ्जकोटरेवसन् विमुक्तदुर्मतिः सदा
शिरः स्थमञ्जलिंवहन् ॥ विलोललोललोचनो ललामभाल
लग्नकः शिवेति मन्त्र मुच्चरन् कदासुखी भवाम्यहम् ॥१३॥
इमंहिनित्यमेवमुक्त मुत्तमोत्तमंस्तवं पठन्स्मरन्ब्रुवन्नरो विशुद्धि
मेति सन्ततम् ॥ हरेगुरौ सुभक्तिमाशुयातिनान्यथा गतिं
विमोहनं हि देहिनां सुशंकरस्य चिन्तनम् ॥ १४ ॥ पूजाव-
सानसमये दशवक्त्रगीतं यः शम्भु पूजनपरं पठतिप्रदोषे ॥
तस्यस्थिरां रथगजेन्द्र तुरंगयुक्तां लक्ष्मीं सदैव सुमुखीं प्रद-
दातिशम्भुः ॥ १५ ॥

॥ इति श्री रावण कृतं शिवताण्डव स्तोत्रं सम्पूर्णम् ॥

## शिवापराध क्षमापन स्तोत्रम् ॥

आदौकर्म प्रसंगात्कलयति कलुषंमातृकुक्षौ स्थितं मां।
विण्मूत्रामेध्यमध्ये क्वथयति नितरां जाठरो जातवेदाः ॥
यद्यद्वै तत्रदुःखंव्यथयति नितरां शक्यतेकेनवक्तुं। क्षन्तव्यो
मेऽपराधः शिव शिवभोश्रीमहादेव शंभो ॥ १ ॥ बाल्ये
दुःखातिरेको मललुलितवपुः स्तन्यपाने पिपासा। नोशक्त
श्चेन्द्रियेभ्यो भवगुणजनिता जन्तवोमां तुदन्ति ॥ नानारो-
गादि दुःखाद्रुदनपरवशः शङ्करं नस्मरामि। क्षन्तव्योमेऽप-
राधः शिवशिवभो श्रीमहादेवशंभो ॥ २ ॥ प्रौढोऽहं यौवन-
स्थो विषयविषधरैः पञ्चभिर्मर्मसन्धौ दष्टो नष्टो विवेकः सुत-
धनयुवतिस्वादसौख्ये निषण्णः शैवीचिन्ताविहीन मन
हृदयमहो मानगर्वाधिरूढम् क्षन्तव्योमेऽपराधः शिवशिवभो
श्रीमहादेवशंभो ॥ ३ ॥ वार्द्धक्ये चेन्द्रियाणां विगतगतिमति
श्चाधिदैवादितापैः पापै रोगै वियोगै स्त्वनवसितवपुः प्रौढिहीनं
चदीनम् ॥ मिथ्या मोहाभिलाषैर्भ्रमति ममतनो धूर्जटेर्ध्यान
शून्यं क्षन्तव्योमेऽपराधः शिव शिवभो श्रीमहादेव शंभो ॥४॥
नोशक्यं स्मार्तकर्म प्रतिपद गहनप्रत्यवायाकुलाख्यं श्रौते-
वार्ताकथंमे द्विजकुलविहिते ब्रह्ममार्गे सुसारे ॥ नास्थाधर्मे
विचारः श्रवणमननयोः किंनिदिध्यासितव्यं क्षन्तव्योमेऽपरा
धः शिवशिवभो श्रीमहादेव शंभो ॥५॥ स्नात्वा प्रत्यूषकाले

स्नपनविधिविधौ नाहृतंगांगतोयं पूजार्थं वाकदाचिद्बहुतर गहना रवण्डबिल्वीदलानि ॥ नानीतापद्ममाला सरसि विकसिता गन्ध पुष्पे त्वदर्थं चन्तव्योमेऽपराधः शिव शिवभो श्रीमहादेव शम्भो ॥ ६॥ दुग्धैर्मध्वाज्य युक्तैर्दधिसित सहितैः स्नापितंनैवलिंगं नोलिप्तं चन्दनाद्यैः कनकविरचितैः पूजितं नप्रसूनैः ॥ धूपैः कर्पूरदीपै विविधरसयुतैर्नैव भक्ष्योपहारैः चन्तव्योमेऽपराधः शिव शिवभो श्रीमहादेव शम्भो ॥ ७ ॥ ध्यात्वा चित्ते शिवाख्यं प्रचुरतरधनं नैवदत्तं द्विजेभ्यो हव्यं ते लचसंख्यैर्हुतवह वदने नार्पितं बीजमन्त्रैः॥ नोतप्तं गांग तीरे व्रतजपनियमैं रुद्रजाप्यैर्नवेदैः चन्तव्योमेऽपराधः शिव शिव भो श्रीमहादेव शम्भो ॥ ८ ॥ स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुण्डलेसूद्ममार्गे शान्ते स्वान्ते प्रलीने प्रकटित विभवेज्योतिरूपे पराख्ये ॥ लिंगज्ञे ब्रह्मवाक्ये सकलतनगतं शंकरंनस्मरामि चन्तव्योमेऽपराधः शिव शिव भो श्रीमहादेव शम्भो ॥ ६ ॥ नग्नोनिःसंगशुद्धं त्रिगुणविरहितोध्वस्तमोहान्धकारो नासाग्रेन्यस्तदृष्टि विदितभवगुणोनैवदृष्टः कदाचित् ॥ उन्मन्यावस्थया त्वां विगतकलिमलं शङ्करं नस्मरामि चन्तव्योमेऽपराधः शिव शिव भो श्रीमहादेव शम्भो ॥ १० ॥ चन्द्रोद्भासितशेखरे स्मरहरे गंगाधरे शङ्करे सर्पैर्भूषितकण्ठ कर्णविवरे नेत्रोत्थवैश्वानरे ॥ दन्तित्वक्कृतसुन्दराम्बरधरे

त्रैलोक्यसारे हरे मोक्षार्थं कुरुचित्तवृत्तिमखिलामन्यैस्तु किं कर्मभिः ॥ ११ ॥ किं वानेन धनेन वाजिकरिभिः प्राप्तेन राज्येन किं किंवा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् ॥ ज्ञात्वैतरक्षणभंगुरं सपदिरेत्याज्यंमनो दूरत· स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥ १२ ॥ आयुर्नश्यति पश्यतां प्रतिदिनं यातिक्षयं यौवनं प्रत्यायान्तिगताः पुनर्न दिवसाः कालोजगद्भक्षकः ॥ लक्ष्मीःतोय तरंगभंग चपला विद्युच्चलं जीवितं तस्मान्मां शरणागतं शरणदत्त्वंरक्ष रक्षाधुना ॥ १३ ॥ कर चरणकृतं वाक्कायजं कर्मजंवा श्रवणनयनजं वा मानसं वापराधम् ॥ विहितमविहितं वासर्वमेतत्क्षमस्व जय जय करुणाब्धे श्री महादेव शम्भो ॥ १४ ॥

इति श्री शंकराचार्य विरचितं शिवापराध क्षमापन स्तोत्रं

॥ सम्पूर्णम् ॥

सातवारों पर सुसिद्ध प्रयोग

## षोडशीदेवी तथा वटुक के ॥

रवौ उत्थायशयनाद्गत्वामेनिगृहान्तके ॥ मूलमन्त्रंसाधकस्तु जपेदयुतसंख्यया ॥ होमोजातोफलैः पुष्पैः पत्रैश्चघृतमिश्रितैः ॥ शत्रुसैन्यादिदस्यूनां वादिनांस्तंभनं भवेत् ॥ सोमे मध्याह्न समयेस्नात्वाकूप जलेनतु ॥ कूपान्तके मनुंजप्त्वा

साधकोऽयुत संख्यया॥ होमयेद्घृतमिश्रंच माहिषंदधिशर्करा॥ मत्स्येनतिलकं कुर्यादमोहयेद्भुवनत्रयम् ॥ भौमार्द्ध रात्रिसमयेचतुः पथगतस्सुधीः॥ अयुतांकंजपेन्मंत्री होमयेद्घृतपायसं॥ रक्त चन्दनमिश्रेण स्त्रीकेशश्च समन्वितं ॥ तथावचः सैंधवं च गुड्चीमरिचस्तथा ॥ आज्याक्तेन हुनेन्मंत्री गुग्गुलेन समं-तदा ॥ शत्रुः कालसमानोपि मृत्युमेश्यतिनान्यथा ॥ बुधे निशावसानेतुगत्वा शून्यालयेजपेत् ॥ अयुतंमूलमंत्रंतुहोमयेद्घृ तेशर्कराम् ॥ कर्णिकार सहस्राणि बिल्वयुक्तातिपार्वति ॥ रम्भाद्यप्सरसां चापिभवेदाकर्षणंपरम् ॥ गुरौ सूर्योदयेगत्वा नदीतीरंचसाधकः ॥ मूलमंत्रंतु देवस्यजपेदयुतसंख्यया ॥ होमः सर्पिदधिक्षीरं मालती पुष्पसंयुतैः॥ श्रीफलैः सहसादेवि वशयेदखिलंजगत् ॥ शुक्रे निशामुखे गत्वा वट मूलंजपेन्मनुं॥ अयुतं साधको भक्त्याहोमः कार्यस्तुसर्पिषा ॥ दध्नाद्राक्षाविमिश्रेण गोमूत्रेण च पायसैः ॥ शत्रोर्मत्स्यदशस्यापि भवेदुच्चाटनंपरम् ॥ शनौप्रभातसमयेकृत्वास्नानादिकंसुधी ॥ आगत्यार्चनशालायां जपेन्मंत्रायुतं शिवे ॥ होमयेत्सर्पिषांभोजसहस्राणिचतुर्दश ॥ ग्रहाणांदेवकोपानां यक्षाणांराक्षसांस्तथा ॥ क्रूराणामपिदुष्टानां महाशान्तिःप्रजायते ॥ पौष्टिकम् ॥ होमयेत्सर्पिषाचार्द्रं मिश्रंचन्दनवारिणा ॥ पायसंतत्रमिश्रंचमीनमांससमन्वितम् ॥ देवतानां मनुष्याणां रोगार्तानांमहेश्वरि ॥

ब्रह्मादीनां व्रतादीनां महापुष्टिः प्रजायते ॥ अत्रमूलंगुरुमुखा-दवगंतव्यः ॥

अथ कार्त्तवीर्यार्जुन नित्यदीप विधिः ॥

शौचं । पादचौचं । आचमनं । अपामार्ग द्वादशाङ्गुलदन्त धावनम् । प्रातः स्नानं । सन्ध्या । शुद्ध कपिला गोमयं । अज्ञामे अन्यासां । अम्लं । दीपपात्रं रत्नत्रयमितं ताम्रादि । त्रिधौतशुद्धतन्दुलाः । रक्तचन्दनं । रक्तगन्धं । रक्तपुष्पाणि पीताम्बरं । छुरिका । पञ्चगव्यं गोमूत्रं गोमयं चीरं दधिसर्पिः ६ । १२ । १६ । ११ । ८ । चल्लैः विपरीतगणना । वस्त्रयुग्मं । श्री फलं । चन्दनं । मधु । अंगुलचतुष्टया स्थूलबुध्नाशलचणा तीक्ष्णाग्रात्रिशूलांकिता सरलामध्ये ताम्रादिशलाका। त्रिधौतं सूत्रं । अकृष्णकुंभः । शरावं । पुष्पमाला । सर्वौषधी । शर्करा । पंचरत्नानि । पंचपल्लवाः प्लक्षनोधिवट आम्रउदुम्बरजाः । शमी सिद्धार्थः कुशाः । उदकपूर्णकुम्भः । स्वादुफलानि । पंचामृतं पयः दधिघृतंमधुशर्कराः । अंगुलीयकं । कर्णभूषम् । अंगदं । उपवीत वस्त्रयुग्मं वरणार्थंगुरोः । अष्टांगुलारेखा दक्षिणाग्रा उत्तरार्धे, द्वितीया दक्षिणाग्रा प्रतीच्यर्धे, तृतीया उत्तराग्रा प्रतीच्यग्रेमेलयेत् तत्त्रिकोणमष्टांगुलं सम्मूत्रेणगोमयेनलेपयेत्॥ बुध्नेसार्द्धांगुलं उच्छ्रायेणमार्द्धांगुलं चतुरंगुलं मायामंता-मादिदीपपात्रं अम्लजनसंशोध्यपश्चात्पंचगव्येनसंशोध्य । छुरी

शोदशा दक्षिणाभिमुखी दीपपात्राद्दक्षिणतः स्थापयेत् । गुरोः वस्त्रांगुलीयादिनावरणं पूजा । श्रीफलं गृहीत्वा गुरोरग्रेनिवेद-येत । तत्रमंत्रः। ॐ भवत्यासमागतोहं ते पादयोर्भक्तवत्सल॥ दीपकार्यं च भवतासंवाद्यं वै नमोनमः ॥ इत्युक्त्वादंडवत् भूमौनमस्कुर्यात्पुनः पुनः । आचमनं । प्राणायामः। मासपक्ष-तिथीनुक्त्वासंकल्पः। स्वकामनामुच्चार्यभुवि उदकांनाक्षिपेत् । त्रिकोणमध्येषट्कोणं रक्तचंदन लिप्ततंदुलैः सप्तकोष्ठान्पूरयेत्। मायाबीजंकर्णिकायां षट्पत्रेबीजषट्कंदिक्षुबीजचतुष्कं शेषेवेष्ट-येत् तस्योपरिदीपपात्रंपलत्रयंन्यसेत । नित्यदीपपात्रेप्रत्यङ्-मुखं ४२ तंतुमितांवर्ति स्थापयेत् । गोघृतेनपूर्यं दीपं ज्वालयेत् । तत्रमंत्रः ॥ ॐ ह्रां ह्रीं ह्रं ह्रीं कार्तवीर्यार्जुनरदिर्णहिममकार्यं सन्निधिंकुरुकुरु स्वाहा । कार्तवीर्य महावीर्य कार्यसिद्धिं कुरु। पात्रे शलाकांनिवेशयेत । तंदीपंषोडशोपचारैः संपूज्यमूलमंत्रे-णार्घ्यंसंपूजयेत् । ॐ अस्यश्रीकार्तवीर्यार्जुन विंशत्यर्णमंत्रस्य दत्तात्रेयायऋषयेनमः शिरसि । ॐ अनुष्टुप्छन्दसेनमःमुखे। ॐकीर्तवीर्यार्जुनदेवतायैनमो हृदि। ॐबीजायनमः गुह्ये । ॐह्रीं शक्तयेनमः पादयोः ॐक्लींकीलकायनमः सर्वांगे। ॐफ्रांचां अंगुष्ठाभ्यांनमः ॥ हृदयायनमः ॥ ॐ वर्लीं श्रीं तर्जनीभ्यां नमः, शिरसेस्वाहा। ॐ श्रां ह्रीं मध्यमाभ्यां नमः, शिखायैव-षट् ॥ ॐ क्रैंश्रंअनामिकाभ्यां नमः, कवचायहुँ ॥ ॐ हुं फट्

कनिष्ठिकाभ्यां नमः, नेत्रत्रयायवौषट् ॥ ॐ कार्तवीर्यार्जुनाय नमः, सर्वाङ्गे ॥ ॐ फ्रों ॐ हृदि। ॐ व्रीं ॐ उदरे। ॐक्लीं ॐ नाभौ। ॐ भ्रूं ॐ जठरे। ॐ श्रां ॐ गुह्ये ॥ ॐ ह्रीं ॐ दक्षपादे। ॐ क्रों ॐ वामपादे॥ ॐ श्रीं ॐ आवृत्याऊर्वोः। ॐ हुं ॐ आवृत्याजान्वोः। ॐ फट् ॐ आवृत्याजंघयोः॥ ॐ कार्तवीर्यार्जुनाय नमः सर्वांगे। ॐ फ्रां ॐ मस्तके॥ ॐ व्रीं ॐ ललाटे। ॐ क्लीं ॐ भ्रुवोर्मध्ये। ॐ भ्रूं ॐ कर्णयोः। ॐ श्रां ॐ नेत्रयोः। ॐ ह्रीं ॐ नासिकयोः। ॐ क्रां ॐ मुखे। ॐ श्रीं ॐ कंठे। ॐ हुं ॐ दक्षबाहौ। ॐ फट् ॐ वामबाहौ। ॐ कार्तवीर्यार्जुनायनमः सर्वाङ्गे॥

ध्यानम्।

अध्यारसर्वं भयात्प्रभाकरनिभः प्रद्योतनोद्योदितः। स्वर्ण स्त्रक्परिवीतकंधरधरो रक्तांशुकोष्णोपवान्। नानाकल्पविभूषितः करसहस्राद्धीत्तबाणासनो, बाणात्ताद्र्ध सहस्रबाहुरनिशं भूवल्लभोनःप्रभुः॥ १॥ सप्तद्वीपैकनाथः सवितृसमरुचिः सत्रुदुष्टान्तको नः। पायादब्जायताक्षो रथवरनिलयः स्थूल कायोतिभीमः॥ चापाक्षेपुः त्रिलोकींकरविधृतधनुर्निस्वनैस्त्रासयंनः सःश्रीमान् कार्तवीर्यो निखिलनृपनतांघ्रयंघ्रुगः क्षिपकारी॥ २॥ दीपात्पूर्वभागेष्ट गंधलिखितताम्रपात्रयंत्र राजंनिधाय तत्रपूजाकार्या॥ मासपक्षतिथीनु कृत्वासंकल्पं

कुर्यात् । हस्तेचंदनाक्षतपुष्पयुक्तंजलं गृहीत्वाकरसंपुटंकृत्वा पश्चिमाभिमुखो भूत्वामंत्रंशताक्षरं पठित्वा भूमौजलं निक्षिपेत् ॥ तत्रशताक्षरीमंत्रः ॥ अस्यशताक्षरीमंत्रस्य दत्तात्रेयऋषिः कार्तवीर्यार्जुनो देवताअनुष्टुप्छन्दः क्लींकीलकं रक्षार्थेविनियोगः। ॐ आं ह्रीं वषट् फ्रों च्रीं क्लीं कार्तवीर्यार्जुनाय माहिष्मतीनाथाय सहस्रबाहवेसहस्रक्रतुदीक्षिताय दत्तात्रेयप्रियाय आत्रेयाय अनुसूयागर्भरत्नाय हूं आं इमंदीपं गृहाण मां रक्षरक्ष दुष्टान्नाशय२ घातय२ शत्रून् जहि२ ह्रीं ॐ फ्रीं क्लीं ईं स्वाहा ॥ अनेन दीपवर्येण पश्चिमाभिमुखेन मांरक्ष२ देवदत्त वरप्रदानाय हूं हूं ह्रीं क्लीं च्रीं स्वाहा इतिजलं भूमौ निक्षिपेत् ॥ तंथंदंधंनंपंफंबंभंमं ॐ स्वाहा ॥ इतिपश्चिमाभिमुखो भूत्वा करसंपुटं कृत्वासकृदुक्त्वा पुनःमंत्रं नवार्णं जप्यात्॥ तत्रमंत्रः॥ ॐआं ह्रीं फ्रीं च्रीं स्वाहा क्रों ॐ॥ दीपाग्रे एकपादेन सहस्रं जपेत् । यंत्रराजात्पूर्व भागे कलशं संस्थाप्य सम्यगभ्यर्च्चयेत् तत्रपूजामंत्राः॥ ॐ इन्द्रायनमः । ॐआग्नये नमः । ॐ यमायनमः । ॐ निर्ऋतयेनमः । ॐ वरुणायनमः । ॐ वायवे नमः । ॐ सोमायनमः । ॐ ईशानायनमः ॐ ब्रह्मणे नमः । ॐ अनंतायनमः । ॐ वज्रायनमः । ॐशक्तयेनमः । ॐ दंडायनमः । ॐ खड्गायनमः । ॐ पाशाय नमः । ॐ अंकुशायनमः । ॐ गदायैनमः । ॐ शूलायनमः ।

ॐ पद्मायनमः । ॐ चक्रायनमः । ॐ चौरमदविभंजनाय नमः। ॐ मारीमद् विभंजनायनमः। ॐ अरिमदविभंजनाय नमः। ॐ सुरारि मदविभंजनायनमः । इति पूर्वादिदिक्षु । ॐ दुष्टनाशनायनमः । ॐ दुःखनाशनायनमः । ॐ दुरितनाशनायनमः । ॐ आमयनाशनायनमः । इति विदिक्षु ॥ अर्थादिक्षु ॥ ॐ क्षेमंकर्य्यैनमः । ॐ वश्यंकर्य्यैनमः । ॐ श्रीकर्य्यैनमः । ॐ यशस्कर्य्यैनमः । विदिक्षु ॥ ४ ॐ आयुष्कर्य्यैनमः । ॐ प्रज्ञाकर्य्यैनमः । ॐ विद्याकर्य्यैनमः । ॐ धनंकर्य्यैनमः । विदिक्षु ४ ॥ ततः ॥ अष्टशतनामोत्यामूर्तयः पूज्याः ॥ ॐ कार्तवीर्यार्जुनायनमः ॥ १ ॥ ॐ धन्विने नमः ॥ २ ॥ ॐ राजेन्द्रायनमः ॥ ३ ॥ ॐ ह्रैं हयेश्वरायनमः ॥ ४ ॥ ॐ दत्तात्रेयप्रियतमायनमः ॥ ५ ॥ ॐ सहस्रभुजमंडितायनमः ६ ॥ ॐ चापिनेनमः ॥ ७ ॥ ॐ खड्गिनेनमः ॥ ८ ॥ ॐ रथिनेनमः ॥ ९ ॥ ॐ बाणिनेनमः ॥ १० ॥ ॐ तूणिनेनमः ॥ ११ ॥ ॐ वर्मिणेनमः ॥ १२ ॥ ॐ महाबलायनमः ॥ १३ ॥ ॐ सुभगायनमः ॥ १४ ॥ ॐ सुमुखायनमः ॥ १५ ॥ ॐ शांतायनमः ॥ १६ ॥ ॐ चक्रवर्तिनेनमः ॥ १७ ॥ ॐ गुणाकरायनमः ॥ १८ ॥ ॐ दशास्यदर्पहंत्रेनमः ॥ १९ ॥ ॐ रेवासालातृप्तायनमः ॥ २० ॥ ॐ सुदुर्जयायनमः ॥ २१ ॥ ॐ महाचोर दमनायनमः ॥ २२ ॥

ॐ राजराजेश्वरायनमः ॥ २३ ॥ ॐ प्रभवेनमः ॥ २४ ॥ ॐ सर्वज्ञायनमः ॥ २५ ॥ ॐ सर्वदायनमः ॥ २६ ॥ ॐश्रीमते नमः ॥ २७ ॥ ॐ सर्वेशिष्टेष्टदायनमः ॥ २८ ॥ ॐ कृतिने नमः ॥ २६ ॥ ॐ राजचूडामणयेनमः ॥३०॥ ॐयोगिनेनमः ॥ ३१ ॥ ॐ सप्तद्वीपाधिनायकायनमः ॥ ३२ ॥ ॐ विजयिनेनमः ॥ ३३ ॥ ॐ विभूषायनमः ॥ ३४ ॥ ॐ वाग्मिनेनमः ॥ ३५ ॥ ॐ महामतयेनमः ॥ ३६ ॥ ॐ अलोलुपायनमः ॥ ३७ ॥ ॐ यज्विनेनमः ॥ ३८ ॥ ॐ विप्रप्रियायनमः ॥३६॥ ॐ विद्वसेनमः ॥ ४० ॥ ॐ महागेयायनमः ॥ ४१ ॥ ॐ मनातनायनमः ॥ ४२ ॥ ॐ माहिष्मतीपतयेनमः ॥ ४३ ॥ ॐ योद्ध्रेनमः ॥ ४४ ॥ ॐ महाकीर्तयेनमः ॥ ४५ ॥ ॐ महाभुजायनमः ४६ ॥ ॐ सुकुमारायनमः ॥ ४७ ॥ ॐ महावीरायनमः ॥४८॥ ॐ मारघ्नायनमः ॥ ४६ ॥ ॐ मदिरेक्षणायनमः ॥ ५० ॥ ॐ शत्रुघ्नायनमः ॥ ५१ ॥ ॐ शाश्वतायनमः ॥ ५२ ॥ ॐ शूरायनमः ॥ ५३ ॥ ॐ शंखमूर्तयेनमः ॥ ५४ ॥ ॐ योगिवल्लभायनमः ॥ ५५ ॥ ॐ महामागवतायनमः ॥ ५६ ॥ ॐ धीमतेनमः ॥ ५७ ॥ ॐ ॐ महापापविनाशनायनमः ॥ ५८ ॥ ॐ अमात्यविग्रहाय-नमः ॥ ५६ ॥ ॐ दिव्यमावव्याप्तजगत्त्रयायनमः ॥ ६० ॥ ॐ सर्वशास्त्रकलापारायनमः ॥ ६१ ॥ ॐ विरजसेनमः ॥ ६२ ॥

ॐ लोकवंदितायनमः ॥ ६३ ॥ ॐ वीरायनमः ॥ ६४ ॥ ॐ विमलसत्त्वाढ्यायनमः ॥ ६५ ॥ ॐ महाबलपराक्रमायनमः ॥ ६६ ॥ विजयायनमः ॥ ६७ ॥ ॐ श्रीमयायनमः ॥६८॥ ॐ मान्यायनमः ॥ ६९ ॥ ॐ जितारयेनमः ॥ ७० ॥ ॐ मंत्रनायकायनमः ॥७१॥ ॐ खड्गभृतेनमः ॥ ७२ ॥ ॐ कामदायनमः ॥७३॥ ॐ कान्तायनमः ॥७४॥ ॐ कालघ्नायनमः ॥ ७५ ॥ ॐ कमलेचणायनमः ॥७६॥ ॐ भद्रवादप्रियायनमः ॥ ७७ ॥ ॐ वेद्यायनमः ॥ ७८ ॥ ॐ विबुधायनमः ॥ ७९ ॥ ॐ वरदायनमः ॥ ८० ॥ ॐ वशिनेनमः ॥ ८१ ॥ ॐ जितेन्द्रियायनमः ॥ ८२ ॥ ॐ जितारातयेनमः ॥ ८३ ॥ ॐ स्वच्छन्दायनमः ॥ ८४ ॥ ॐ अनन्तविक्रमाय नमः ॥ ८५ ॥ ॐ चक्रभृतेनमः ॥ ८६ ॥ ॐ परचक्रघ्नायनमः ॥ ८७ ॥ ॐ संग्रामविधिपूजितायनमः ॥ ८८ ॥ ॐ महाधनायनमः ॥ ८९ ॥ ॐ निधिपतयेनमः ॥ ९० ॥ ॐ महायोगायनमः ॥ ९१ ॥ ॐ गुरुप्रियायनमः ॥९२॥ ॐ योधाढ्याय नमः ॥ ९३ ॥ ॐ सर्वरोगघ्नायनमः ॥ ९४ ॥ ॐ राजिताखिलभूतलायनमः ॥ ९५ ॥ ॐ दिव्यास्त्रविदेनमः ॥ ९६ ॥ ॐ अमेयात्मनेनमः ॥ ९७ ॥ ॐ महागोप्त्रेनमः ॥ ९८ ॥ ॐ महोज्ज्वलायनमः ॥ ९९ ॥ ॐ सर्वायुधधरायनमः ॥१००॥ ॐ अभीष्टप्रदायनमः ॥ १०१ ॥ ॐ परपुरञ्जयायनमः ॥१०२

ॐ योगसिद्धायनमः ॥ १०३॥ ॐ महाकायायनमः ॥ १०४॥ ॐ महावृन्दशताधिपायनमः ॥ १०५ ॥ ॐ सर्वज्ञाननिधये-नमः॥१०६॥ ॐ सिद्धायनमः ॥१०७॥ ॐ सर्वज्ञानकृतोद्य-मायनमः ॥१०८॥ एवंविष्णु मार्गेणकुंभंसंपूज्यश्रीफलंदत्वा मंत्रंपठेत् ॥ ॐकार्तवीर्यसुराधीश भक्तानामभयंकर ॥ ममाभी-ष्टाय सततंकुंभमेनं ममाश्रय ॥ ग्रासविंशत्यर्णमंत्रजपः । ततः कवचंपठेत् ॥ विसर्जनंनकार्यं ॥ दीपदानफलसिद्धयर्थंगुरवे दक्षिणां गोदानंशुभं ॥ गोदानेचसुवर्णस्य सहस्रपलमेवच । पंचशतंतदर्धंचतदर्धार्द्धेनवापुनः । अशक्तस्यापिउक्तोयं पंच-माशोयमेवच ॥ तदर्द्धेनवदर्द्धेनतदर्द्धार्द्धेनवापुनः ॥ यथा-कथंचिद्देवेशिदीपोदेयो विजानता ॥ संतुष्टेचगुरौदेविसंतुष्टो-गोपविस्तदा ॥ असंतुष्टेगुरौदेविकार्यामर्दिर्न जायते ॥ इति श्री उड्डामरेश्वरतंत्रे श्री उमामहेश्वर संवादे कल्पोक्तनिरयदीप दान विधिः ॥ यंत्रराजः ।

लिखेदष्टदलं पद्मं कर्णिकाकेसरोज्वलं वृत्तंवहिर्भू पुरा-न्वितंचाद्कोणविभूषितम् ॥ मूलबीजं कर्णिकायांसाध्याचाकर्म संयुतं ॥ लिखेत्तारबीजंच सहतारशतंप्रिये ॥ सवागमंतु पूर्वादिवसुपत्रेलिखेत्ततः ॥ सवर्मांतानि बीजानि शिष्टार्णानि-तरालके ॥ केसरेषुस्वरान्मुक्तवर्णपुक्तान्समर्पयेत् । वृत्तंमंत्राष्टये-द्वर्णैः कादिभिश्रोमवर्जितैः ॥ भूमिकोण चतुष्केषु भूतवर्णा-

न्समालिखेत् ॥ तत्तरकार्यवशाद्देवितांस्तांवर्णान्समर्पयेत् ॥ अस्यभूपुरकोणेस्मिन् यंत्रेपद्मगतेशुभे । संस्थाप्यविधिवत्प्राज्ञः कलशंसम्यगर्चयेत् ॥ इन्द्रादीन्दशदिग्पालान्सायुधान्पूजयेच्छिवे · नित्यदीपंतुदेवेशिगोघृतेनैवकारयेत् ॥ घृतनियमोनास्ति नित्यदीपेसुशचिते । चत्वारिंशद्वर्तिकानित्यदीपेतुकारयेत् ॥ तदर्द्धमपिचप्रोक्तंदेवि विश्वातिहारिणी ॥

---

शिवरात्रि पूजा ।१

त्रयोदशी में एक वार भोजन करके चौदस के दिन स्नानादि नित्य कर्म संध्या तर्पण आदि करने के उपरान्त संकल्प करें । देश काल को बोल कर शिवको प्रसन्नता के लिये तथा शिवलोक प्राप्ति के लिये शिव चतुर्दशी में प्रथम यामादि पूजन करूंगा । सायंकाल में नदी, तालाव, कूप, अथवा घर में ही स्नान करके भस्म का त्रिपुंड्र रुद्राक्ष माला धारण कर सायंकाल में शिव मंदिर व घर ही में हाथ पैर धोकर आसन पर बैठ उत्तर मुंह करके आचमन करे · ॐ ह्रां आत्मतत्वाय स्वाहा । ॐ ह्रीं विद्यातत्वाय स्वाहा । ॐ ह्रूं शिवतत्वाय स्वाहा । [1]भूत शुद्धि आदि करके ४८ पृष्ट में लिखी हुई गणेशादि का पूजन करके शिव

---

१भू शुद्धि आदि न्यास ११ पृष्ठ मे लिखे हैं ।

पंचाक्षर मंत्र से न्यास करे। ॐ अस्यश्री शिव पंचाक्षर मंत्रस्य वाम देवऋषिः अनुष्टुपछन्दः श्री सदाशिवो देवता श्री सदाशिव प्रीत्यर्थंन्यासे पूजनेचविनियोगः ॥ ॐ वामदेव ऋषयेनमःशिरसि। ॐ अनुष्टुपछन्दसेनमो मुखे। ॐ सदाशिव देवतायै नमोहृदि। ॐ नंतत्पुरुषायनमः हृदये। ॐ मं अघोरायनमः पादयोः ॥ ॐ शिंसद्योजातायनमः गुह्ये ॥ ॐ वां वामदेवाय नमः मूर्द्धिन ॥ ॐ य ईशानायनमः मुखे ॥ ॐ ॐ हृदयायनमः ॥ ॐ नंशिरसे स्वाहा ॥ ॐ मंशिखायैवषट् ॥ ॐ शिंकवचायहुँ ॥ ॐ वां नेत्रत्रयायवौषट् ॥ ॐ यं अस्त्रायफट् ॥ ध्यान करना ॥ ॐ त्र्यंबकंयजामहे सुगंधिं पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्वलांगं परशुमृगवराभीति हस्तं प्रसन्नं ॥ पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रं ॥ इतिध्यात्वा ॥ स्थापित मूर्ति में प्राण प्रतिष्ठा न करना पार्थिव में हमेशा प्राण प्रतिष्ठा करना। प्राण प्रतिष्ठा—पृष्ट में है ॥

शिव पूजन विधि   पृष्ठ में देखना।

प्रथम प्रहरादि विषये विशेषः

तत्र प्रथम यामपूजांकरिष्ये ॥ ॐ नमः शिवायेति सर्व उपचार से पूजन करना॥ दूसरे प्रहर में ॥ द्वितीययाम पूजांकरिष्ये ॥ श्री शंकरायनमः इस मंत्र से सब उपचार से पूजन करना *मध्यरात्रि में निशीथ पूजां करिष्ये ॥

ॐ श्री सांवशिवायनमः इस से सर्वोपचार पूजन करना॥ तृतीय प्रहरेयाम पूजां करिष्ये ॥ ॐ महेश्वरायनमः ॥ इस से सर्वोपचार पूजन करना चतुर्थयाम पूजां करिष्ये ॥ ॐ श्री रुद्रायनमः ॥ इससे सर्वोपचार पूजन करना॥ प्रत्येक पूजन में इत्र व सुगंधित तैलका मर्दन पंचामृत स्नान शुद्धोदक गंधोदक अभिषेक करना वस्त्रोपवस्त्र यज्ञोपवीत गंध अक्षत पुष्प पुष्पमाला धूप दीपक नैवेद्य आचमन तांबूल पुगी दक्षिणा धतूरा फल पुष्प, अर्क पुष्प बिल्वपत्र बिल्वफल आदि से करना पूजन के समय जो पदार्थ द्रव्याभाव मे न हो उसके अभाव में अक्षत व उस पदार्थ का स्मरण मात्र करना पूजांते प्रार्थना ॥

---

नोट १-*मध्यरात्रि अर्थात् पंचम पूजन करना यह किसी आश्चर्य के मत से है । शिव रात्रि में ४ याम पूजन का विधान है ।

नित्यं नैमित्तिकं काम्यं यत्कृतंतुमयासह ॥ तत्सर्वंपरमेशान मयातुभ्यं समर्पितम् ॥ चंदन अक्षत दूर्वा कुश फल जल सहित प्रत्येक प्रहर में पूजा करना ॥
अर्घ्य दान मंत्र प्रहर भेद से

प्रथम प्रहरे—ॐ ह्रीं ईशानायनमः इस मंत्र से केवल दुग्ध से स्नान कराना ॥ अर्घ्य मन्त्रः ॥ शिवरात्रिव्रतं देव पूजा जपपरायणः । करोमि विधि वद्दत्तंगृहाणार्घ्यंमहेश्वर ।

द्वितीय प्रहरे - ॐ ह्रीं अघोरायनमः ॥ अनेन दध्नास्नानम् । ॐ नमःशिवायशान्ताय सर्वपापहरायच । शिवरात्रौ-ददाम्यर्घ्यंप्रसीद उपयासह ।

तृतीय प्रहरे—ॐ ह्रींवामदेवायनमः ॥ अनेन घृत स्नानम्॥ ॐ दुःखदारिद्र्यशोकेन दग्धोहं पार्वतिप्रिये ॥ शिवरात्रौददाम्यर्घ्यंमुमाकान्तप्रसीदमे ।

चतुर्थ प्रहरे—ॐ सद्योजातायनमः ॥ अनेन मधु स्नानम् ॥ मयाकृतान्यनेकानिपापानि हरशंकर ॥ शिवरात्रौददाम्यर्घ्यं-मुमाकान्तगृहाणमे ।

प्रथम प्रहरे॥ नमः शिवाय शांताय सर्व पाप हरायच ॥ शिवरात्रौमयादत्तं गृहाणार्घ्यं ममप्रभो ॥ द्वि०प्र०॥ मयाकृतान्यनेकानि पापानि हरशंकर ॥ गृहाणार्घ्यंमुमाकांत शिवरात्रौप्रसीदमे ॥ महानिशि (अर्द्ध रात्रौ) ॥ शिवरात्रिव्रतंदेव

पूजाजपपरायणः॥ करोमि विधिवद्दत्तं गृहाणार्घ्यंनमोस्तु ते॥

तृ० या० दुःखदारिद्र्य भारैश्च दग्धोहं पार्वतीपते॥ त्रायस्व मां महादेव गृहाणार्घ्यं नमोस्तुते॥ च० या०॥ किंनजानासि देवेशत्वयिभक्तिं प्रयच्छ मे॥ स्वपादाग्रतलेदेव दास्यं देहिजगत्पते॥ पूजा निवेदनम्॥

प्र० या०॥ नमोयज्ञजगन्नाथ नमस्त्रिभुवनेश्वर॥ पूजां गृहाणमेदत्तां महेशप्रथमेपदे॥

द्वि० या०॥ पूर्वेनंदि महाकालौगणभृंगीचदक्षिणे॥ वृषस्कंदापश्चिमेते देशकालौ तथोत्तरे॥ गंगाचयमुनापार्श्वे पूजागृह्य नमोस्तुते॥

तृ० या०॥ नमोव्यक्ताय सूक्ष्मायनमस्ते त्रिपुरान्तक॥ पूजांगृहाणदेवेश यथाशक्त्युपपादितः॥

च. यामे॥ बद्धोहं विविधैः पाशैः संसार भवबंधनैः॥ पतितं मोहजालेमां त्वं समुद्धर शंकर॥

चारों याम में नृत्य गीत कथा श्रवण अथवा रुद्रों के पाठ आदि से जागरण करना॥ प्रातःकाल में स्नान आदि नित्य कर्म करके शिवजी का पूजन करना तदनंतर १२ वा यथा शक्ति १ ब्राह्मण भोजन कराना और दक्षिणा देकर प्रार्थना करना॥

यन्मयाद्य कृतं पुण्यं तद्रुद्रस्य निवेदितं॥ त्वत्प्रसादा

न्मयादेव व्रतमद्य समर्पितं ॥ प्रसन्नोभव मेश्रीमन् सद्गतिः प्रतिपाद्यतां ॥ त्वदालोकनमात्रेण पवित्रोस्मिन संशयः ॥ संसार क्लेशदग्धस्यव्रतेनानेन शंकर ॥ प्रसीद सु सुखो नाथ ज्ञान दृष्टि प्रदोभव ॥ ❋ इति ❋

श्रीगणेशायनमः ॥ अथ होलिका पूजन विधिर्लिख्यते देशकालौ संकीर्त्य । प्रधान संकल्पं कुर्यात् । होलिकापूजन महंकरिष्ये । असृग्भयसंत्रस्तैः कृतात्वं होलिबालकैः। अतो मांपाहिभातिभ्यो मातेवापत्यमात्मनः ॥ १ ॥ आयुर्देहियशो देहिशिशूनांकुशलाचणं । शत्रूणांचत्तयंदेहि होलिकेपूजिता मया ॥ २ ॥ परितोजलधाराकार्या । चंदनादिभिः पूजनं । रचोघ्नमंत्रैर्घान्यहोमः । ततोर्घ्यः । श्री होलिके नमस्तुभ्यं । ढुंढाक्षेज्जोविमर्दिनि । सर्वोपद्रवनाशाय गृहाणार्घ्यनमोस्तुते । ॥ ३ ॥ प्रार्थना ॥ यन्मयाशीलमालेन निषिद्धाचरणं कृतं । तत्सर्वं क्षम्यतांदेवियतः सर्वसहासिभो ॥ ४ ॥ प्रदक्षिणा त्रयं । शिशिरस्यांतिकेदेवि वसंतमदनप्रिये । आगताकुरु कल्याणं पापसंहर होलिके ॥ ५ ॥ शिशिरस्यांतकर्त्रीत्वंवस-तंस्यविवद्धिनी। अर्चितासिविधानेन बालकानांशिवं कुरु॥६॥ अद्यारभ्य च वर्षांतं शिशूनांममसद्मनि । विघ्नं मर्व मपा कृत्वासर्वदा मंगलंकुरु ॥ ७ ॥ दक्षिणादानं । अद्यपूर्वोच्चरित एवं०तिथौ । कृतस्य होलिका पूजन कर्म्मणिविधे०वामस्तु ।

प्रातर्विभूति वंदनमंत्रः। वंदितासिसुरेंद्रेण ब्रह्मणा शंकरेणच।
अतस्तेवंदनादेवि विभूतेमुक्तिदाभव ॥ ८ ॥ ततआम्रपुष्प,
प्राशनं। चूतमग्रंचसंनस्य कुंदस्य कुसुमंतथा। सचंदनंपि
बाम्यद्यसर्वकामार्थसिद्धये ॥ ९ ॥ ततःस्नात्वा विप्रैः सह
भुंजीत ॥ १० ॥ बलिर्वामनकोदूर्वा -ब्रह्मसूत्रंहुताशिनी।
अप्रतिष्ठाः सदापूज्याः क्लेशदास्तू प्रतिष्ठिताः ॥ ११ ॥

* इति श्री होलिका पूजनं समाप्तं *



कागज के अभाव से बहुत से प्रयोग नहीं लगाये जा सके हैं।